# ❀ श्रीविष्णुसहस्रनामस्तोत्रम् ❀

—:◈:◈:◈:—

श्रीमद्बलदेवविद्याभूषणविरचित—

नामार्थसुधाख्यभाष्येण

समलंकृतम्



सानुवादक



प्रकाशक :

**कृष्णदास बाबा**

❀ श्रीश्रीगौरहरिर्जयति ❀

प्रकाशितग्रन्थसंख्या—१३७

# ❀ श्रीविष्णुसहस्रनामस्तोत्रम् ❀



श्रीमद्बलदेवविद्याभूषणविरचित-
नामार्थसुधाख्यभाष्येण
समलंकृतम्
सानुवादश्च






सम्वत्— २०२३
न्यौछावर— ५० पैसे

प्रकाशक—
कृष्णदासबाबा
कुसुमसरोवर
राधाकुण्ड
(मथुरा)

गौरहरिप्रेस, कुसुमसरोवर, राधाकुण्ड ( मथुरा )

## समर्पणपत्रम

भज-निताइ गौर राधे श्याम।
जप-हरे कृष्ण हरे राम॥

श्रीश्रीमन्महाप्रभुगौराङ्गदेव के प्रेमधर्म्म व नामसंकीर्त्तन-प्रचारक, निरन्तर अष्टसात्त्विकादिभावावली से विभूषित, जीवकल्याणकारक, श्रीश्रीमद्राधारमण-चरणदासदेव (बड़े बाबाजी) के अनुगत, समस्त भक्तिशास्त्रसिद्धान्त-स्फुरण-निष्णान्त, नित्य-लीलाप्रविष्ट, गुरुदेव, बाबाजीमहाराज (श्रीश्रीरामदासबाबा) के पुनीत स्मरण में यह ग्रन्थ प्रस्तुत होकर समर्पित

## दो शब्द—

प्रस्तुत ग्रन्थकार श्रीलबलदेवविद्याभूषण जी का जन्म अष्टादश शताब्दी के शेषभाग में उत्कलदेश, वालेश्वर जिला के अन्तर्वर्त्ति "रेमुणा" के निकट किसी ग्राम पर सम्भ्रान्तवंश में हुआ था। आप बाल्यकाल से ही विद्या-उपार्ज्जन में नियुक्त रहे तथा प्रारम्भिक-विद्यालाभ के उपरान्त व्याकरण, काव्य, अलङ्कार आदि पढ़ कर बाद में न्याय-वेदान्तादि दर्शनशास्त्र में पारङ्गत हुए। दर्शनशास्त्र में आप को असाधारण प्रतिभा थी। वेदान्त-विशारद बलदेवजी ने अल्पसमय में ही आर्य्यावर्त्त-दाक्षिणात्यादि देशों में भ्रमण करते हुए वहाँ के पण्डितों को अपनी विद्याप्रतिभा से पराजित कर दिग्विजयीउपाधी ले ली। बाद में तत्कालीन विख्यात पण्डित श्रीराधादामोदरदासजी से "षट्सन्दर्भादि" भक्ति ग्रन्थ का अध्ययन कर वैष्णवशास्त्र में व्युत्पत्तिवान हुए। राधादामोदरदास जी उनके भक्तिशास्त्र के अध्यापक थे। जो कि श्रीश्यामानन्दप्रभु-परिवार के अधस्तन पंचम शिष्य रहे। बाद में बलदेव जी नीलाचल, नवद्वीपादि दर्शन करते हुए श्रीधाम वृन्दावन में पहुँचे एवं वहाँ श्रीश्यामसुन्दर जी—मन्दिर में निवास करने लगे। आप उस समय गौड़ीय वैष्णव-समाज के अध्यक्ष बन गये। जयपुर में अन्य सम्प्रदाय के कुछ पण्डितों से गौड़ीय वैष्णवों का जो विवाद खड़ा हो गया था उस का निराकरण बलदेवजी ने ही किया। उन्होंने उस पार्वतीयप्रदेश में जाकर उन पण्डितों को अपने विद्याबल से व विचार नैपुण्यता से जीत कर गौड़ीय-मर्य्यादा को सुदृढ़ किया। उसी समय गोविन्दजी की प्रेरणा से ब्रह्मसूत्र-भाष्य का प्रणयन हुआ। स्वल्पकाल में उस महान भाष्य का निर्माण में गोविन्द जी सहायक हुए, अतः उसका नाम गोविन्दभाष्य रखा गया। उसी समय उन्होंने अपनी सम्प्रदाय-भित्ति को सुदृढ़ करने के लिये भाष्यपीठकादि और भी बहु ग्रन्थों का निर्माण किया। इन के द्वारा विरचित ग्रन्थ-समूह—१. श्रीगोविन्दभाष्य, २. सिद्धान्तरत्न,

वा भाष्यपीठक, ३. वेदान्तस्यमन्तक, ४. प्रमेयरत्नावली, ५. सिद्धान्त-दर्पण, ६. साहित्यकौमुदी, ७. काव्यकौस्तुभ, ८. ऐश्वर्य्यकादम्बिनी, ९. व्याकरणकौमुदी ॥

टीका व भाष्यग्रन्थ—१. षट्सन्दर्भ की टीका, २. लघुभागवतामृत की सारङ्गरङ्गदा-टीका, ३. श्यामानन्दशतक की टीका, ४. नाटकचन्द्रिका की टीका, ५. समस्त भागवत की वैष्णवानन्दिनी टीका, ६. गोविन्दभाष्य की सूक्ष्माटीका, ७. सिद्धान्तरत्न की टीका, ८. कृष्णभावनामृत की टीका, ९. सदानन्दविधायिनी टीका, १०. बालतोषणी, ११. संशयशातनी, १२. गोपालचम्पू की शब्दार्थ-बोधिका टीका, १३. पद्यावली की रसिकरङ्गदा टीका, १४. गोपाल-तापनी का भाष्य, १५. स्तवमाला का स्तवमालाविभूषणभाष्य, १६. गीता का गीताभूषणभाष्य, १७. ईशावास्यादि उपनिषदों का भाष्य, १८. छन्दःकौस्तुभ का भाष्य, १९. चन्द्रालोक की टीका, २०. साहित्यकौमुदी की वृत्ति, २१. श्रीनित्यानन्दप्रभुवंशपरिचय का भाष्य, २२. विष्णुसहस्रनाम का प्रस्तुत यह "नामार्थसुधाभाष्य"। इन का विशेष विवरण भाष्यपीठक की भूमिका में देखिये। प्रायतः समस्त सम्प्रदाय के आचार्य्यों ने ब्रह्मसूत्र, उपनिषद्, गीता तथा विष्णुसहस्रनाम का भाष्य व विस्तृतव्याख्यान किये हैं। अतः श्रीबलदेवजी ने भी उन सब पर भाष्य व टीका निर्माण कर सम्प्रदाय-गौरव की रक्षा व वृद्धि की। विष्णुसहस्रस्तोत्र पर शंकराचार्य्यादि महानुभावों ने अपनी २ रुचिके अनुसार व्याख्या की है। श्रीयुक्त बलदेवजी की इस भक्तिसंपृक्तव्याख्या में अधिकतया भक्तपक्षीय व व्रजपक्षीय व्याख्या मिलेगी। अस्तु हम श्रीमतीसुदेशकुमारी देवी, देहलीनिवासी को हार्दिक धन्यवाद देते हैं कि आपने श्रीबलदेवविद्याभूषण के अनुसन्धानात्मक-कार्य्य ( रिसर्च ) का भार लिया है, एवं देवाक्षर में बलदेवजी के ग्रन्थों का प्रकाशन के लिये उत्साहित किया ॥

( कृष्णदास )

# ❀ श्रीविष्णुसहस्रनामस्तोत्रम् ❀

वैशम्पायन उवाच—

श्रुत्वा धर्म्मानशेषेण पावनानि च सर्व्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥१॥

## श्रीमद्बलदेवविद्याभूषणभणितनामार्थसुधाभिधं भाष्यम् ।

श्रीश्रीकृष्णचैतन्यचन्द्राय नमः ।

अनन्तकल्याणगुणैकवारिधिर्विभुश्चिदानन्दघनो भजत् प्रियः ।
कृष्णस्त्रिशक्तिर्बहुमूर्त्तिरीश्वरो विश्वैकहेतुः स करोतु नः शुभम् ॥१॥

व्यासं सत्यवतीसुतं मुनिगुरुं नारायणं संस्तुमो
वैशम्पायनमच्युताह्वयसुधामोदं प्रपद्यामहे ।
गाङ्गेयं मुरमर्द्दनप्रियतमं सर्व्वार्थसंविद्वरं
तत्सभ्यानपि तत्कथारसजुषो भूयो नमस्कुर्म्महे ॥२॥

नित्यं निवसतु हृदये चैतन्यात्मा मुरारिर्नः ।
निरवद्योनिवृतिमान् गजपतिरनुकम्पया यस्य ॥३॥

युगपन्नव्यानन्दान् प्रकीर्त्तयन् यानि विन्दते शेषः ।
कृत्स्नं रयभीष्टपूर्त्तेर्जयन्ति नामानि तानि कृष्णस्य ॥४॥

ये नामैकपुमर्थंहरिभक्तास्तान्नमस्यामः ।
भाष्यं येषां कृपया नामार्थसुधा भवेदेतत् ॥५॥

वैशम्पायन इति – "शम्पांशतद्वदामाहुरयनं पतनं ततः । विगतं शब्दोतो यस्मात्तद्वैशम्पायनः स्मृत" इति पुराणोक्तमाहात्म्यः । स व्यासप्रियशिष्यो मुनिः परमोपादेयत्वाद्वक्ष्यमाणं स्तोत्र मपृष्टोऽपि सौहार्द्दात् कारुण्याच्च जन्मेजयं नृपं प्रत्युवाच श्रुत्वेत्यादिभिः । युधिष्ठिरो राजा धर्म्मान् राजधर्म्मादीनशेषतः सामस्त्येन पावनानि

किमेकं दैवतं लोके किम्वाप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥२॥
को धर्म्मः सर्व्वधर्म्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्म-संसार-बन्धनात् ॥३॥

श्रीभीष्म उवाच—

जगत् प्रभुं देव-देवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥४॥

---

तीर्थादीनि च सर्व्वशः सर्व्वाणि श्रुत्वा पुनरपि शान्तनवं भीष्ममभ्यभाषत परिपप्रच्छ ॥१॥

अयं अस्मत् पितामहः शरतल्पस्थः भीष्मः समधीतसाङ्गनिखिलवेदोपनिषद् ब्रह्मचर्य्यादिसर्व्वधर्म्मोपसम्पन्नो भगवद्दत्ताद्वराद्विनिवृत्तशस्त्रव्यथः प्रति-लब्धसार्व्वज्ञ्यः करामलकन्यायेन परिदृष्टपरावरतत्त्वस्ततः परतमं तत्त्वं जिज्ञास्यं तच्च सामान्यतः पृष्टो वक्ष्यतीति भावेन पृच्छति किमिति लोक इति भवतः मत इति च प्रति प्रश्नं सम्बध्यते । विभक्तिश्च यथायोगं विपरिणम्य लोक्यते तत्त्वमनेनेति निरुक्ते र्लोके वेदादिशास्त्रे एकं मुख्यं दैवतं किं भवतो मतम् । एकं मुख्यं परमयनं सर्व्वाश्रयभूतं वस्तु किं भवतो मतमिति द्वितीयः । कं देवं स्तुवन्तः कञ्चार्चन्तो मानवाः शुभं प्राप्नुयुः । कस्य गुणकर्म्मकीर्त्तनेनाराधनेन चाभ्युदयनिश्रेयप्राप्तिर्भवतो मतेनेति तृतीयश्चतुर्थः ॥२॥

क इति त्वयोक्तानां सर्व्वेषां धर्म्माणां मध्ये कः परमः श्रमं विनैवैष फलप्रदो धर्म्मो भवतः सर्व्वज्ञस्याभिमत इति पञ्चमः । जन्तुर्जीवः किं जप्यं जपन् जन्म-संसारबन्धनाद्विमुच्यते ?, जन्म गर्भनिरयनिपातलक्षणं कार्य्यम्, संसारः प्राचीनकर्म्मलक्षणं कारणम्, ताभ्यां बन्धनं परपदप्राप्तिनिरोधनं तस्माद्विमुक्तो भवति भवतो मते-



तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन् स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥५॥
अनादिनिधनं विष्णुं सर्व्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्व्वदुःखातिगो भवेत् ॥६॥

---

नेति षष्ठश्च ॥३॥

एवं सामान्यतः षड़र्थान् पृष्टो विद्वत्तमो भीष्मस्तेषु प्रथमस्योत्तरं विशेषेणाह जगदित्यर्द्धकेन । जगतः स्थिरचरात्मकस्य प्रभुं स्वामिनम्, देवदेवं सर्व्वदेवाराध्यम् , अनन्तं स्वरूपेण गुणैर्विभूतिभिश्चापरिमितम् । अतः पुरुषेषु वद्धमुक्तोभयावस्थेषूत्कृष्टतममिति क्रमं विहाय प्रकृतोत्करठ्या ( प्रकृतेषु नामसु ) तृतीयस्योत्तरमाह स्तुवन्नित्यर्द्धकेन । पुरुषः पुमर्थलिप्सुर्जनः सततमुत्थितः सर्व्वदोद्युक्तो वक्ष्यमाणेन नामसहस्रेण पुरुषोत्तमं स्तुवन् गुणान् कर्म्माणि च तस्यानुकीर्त्तयन्निति षष्ठस्याप्येतदुत्तरम् । सर्व्वदुःखातिगो भवेदित्युत्तरेणान्वयः ॥४॥

चतुर्थस्याह तमेवेति-यजमानोऽर्च्चकः, भक्त्या श्रद्धया "भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयो"रिति हैमः । तमेव पुरुषं कृष्णं स्तुवन् सर्व्वदुःखातिगो भवेदित्यनेन सम्बन्धः । कथं स्तुवन्नित्याह – अर्च्चयन् पाद्यादिभिराराधयन् , ध्यायन् तन्मूर्त्तिनिरतं मनः कुर्व्वन् , नमस्यन् साष्टाङ्गप्रणमन् । पुरुषं विशिनष्टि – अव्ययमिति नित्य-स्वरूप-गुण- विभूति-लीलमित्यर्थः । तच्छब्दस्य द्विःप्रयोगोऽन्वयभेदाददोषः ॥५॥

प्रकृतोपयोगिफलं वदन् पुरुषं विशिनष्टि अनादीति द्वाभ्यां, जन्मविनाशशून्यं नित्यमित्यर्थः । यतो विष्णुं व्यापकं अतः सर्व्वेषां लोकानां तत्पतीनाञ्च महेश्वरम् । लोकास्ते तत् पतयश्चाध्यक्षाः करामलकवत् प्रत्यक्षा यस्य तम् । अत्रानादीत्यकालोपाधिकतया विष्णु-

**ब्रह्मण्यं सर्व्वधर्म्मज्ञं लोकानां कीर्त्तिवर्द्धनम् ।**
**लोकनाथं महद्भूतं सर्व्वभूत-भवोद्भवम् ॥७॥**

मित्यदेशोपाधिकतया चोपकारितायाः सर्व्वेति स्तोतृवाञ्छित-
पूरकताया लोकेति सर्व्वज्ञतायाश्च सूचनादर्च्चन-स्तवन-योग्यत्वं
ईदृशं तं स्तुवन् जनः सर्व्वदुःखातिगो भवेत्तापत्रयदावाग्निमतीत्या-
नन्दसिन्धुं कृष्णं प्राप्यानन्दी भवेन्मुक्तः स्यादित्यर्थः । आदिमे
श्लोके नाम्नां केवलमुच्चारणं मध्ये तदर्च्चनादिपूर्व्वकं तेषां कीर्त्तनं
अन्त्ये तु कथञ्चिदेव तदुच्चारणमुक्तम् । "सकृदुच्चारितं येन हरिरित्य-
क्षरद्वयम् । वद्धः परिकरस्तेन मोक्षाय गमनं प्रति" ॥ "सकृदपि परिगीतं
श्रद्धया हेलया वा, भृगुवर नरमात्रं तारयेत् कृष्णनामे" त्यादि
वाक्येभ्यः । यत्तु दीर्घकालादरनैरन्तर्य्योपसेवितैस्तीर्थतपःसमाधि-
भिर्दुर्लभां मुक्तिं वाक् व्यापारितमात्रेण नाम्ना ब्रुवच्छास्त्रमर्थ-
वाद इत्याह तत्खलु नाम-प्रभावानभिज्ञस्य छान्दस्य पशुत्वमेव ।
अन्यथा "तथार्थवादो हरिनाम्नि कल्पनमि"ति स्मृतिर्व्याकुप्येत् ॥६॥

ब्रह्मण्यं विप्र-देव-तपोभ्यो हितं तेषां पालकमित्यर्थः । सर्व्वान्
वेदोक्तान् धर्म्मानग्निहोत्रदर्शपौर्णमासादीन् स्वार्च्चनध्यानप्रणति-
स्तुत्यादींश्च जानातीति तं तदुक्तफलप्रदमित्यर्थः । लोकानां वेदोक्त-
तत्तद्धर्म्मानुष्ठायिनां जनानां कीर्त्तिवर्द्धनं तदनुगुणद्रविण-विद्या-
वैराग्यादि-प्रदानेन तेषां यशोविस्तारयन्तमित्यर्थः । लोकैर्विधिरुद्रा-
दिभिः स्वाभिलषितलाभाय याचनीयमिति । लोकांस्तान्नाथति
शास्तीष्टे चेति वा लोकनाथं "नाथृणाधृयाच्ञोपतापैश्वर्य्याशीः-
ष्विति" धातुपाठः । "युगकोटि-सहस्राणि विष्णुमाराध्य पद्मभूः ।
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रूम" इति । "महादेवः सर्व्व-
मेधे महात्मा हुत्वात्मानं देवदेवो वभूव । विश्वाल्लोँकान् व्याप्य
विष्टभ्य कीर्त्त्या विराजते द्युतिमान् कृत्तिवासा" इति "एतौ तो विवुध-



**एष मे सर्व्व-धर्म्माणां धर्म्मोऽधिकतमो मतः ।**
**यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्च्चेन्नरः सदा ॥८॥**

श्रेष्ठौ प्रसादक्रोधजावुभौ तदा दर्शितपन्थानौ सृष्टिसंहारकारका"विति
च महाभारतात् । एतच्चान्यत्र बिस्तृतं महत्तेषां लोकानां पूज्यं यतोभूतं
तेभ्यः पूर्व्वसिद्धम् । एतदेवाह सर्व्वेति सर्व्वेषां भूतानां भवो जन्म
याभ्यां तौ सर्व्वभूतभवौ विधिरुद्रौ तयोरुद्भवो यस्मात्तं "प्रजापतिञ्च
रुद्रञ्चाप्यहमेव सृजामि वै । तौ हि मां न विजानीतो मम मायाविमो-
हिता" वित्यादि महाभारतात् ॥७॥

पञ्चमस्योत्तरमाह एष इति - सर्व्वेषां मदुक्तानां धर्म्माणां मध्ये
एष धर्म्मो मे भीष्मस्याधिकतमोऽत्युत्कृष्टो मतः । क एष इति चेत्तत्राह-
यदिति । भक्त्या पुण्डरीकाक्षं कृष्णं तदात्मकनामजपलक्षणैः स्तवै-
रर्च्चेदिति यत् । श्रद्धापूर्व्वकं तन्नामकीर्त्तनलक्षणमर्च्चनमेव भीष्मा-
भिमतः परमो धर्म्म इत्यर्थः । इह भक्त्येति कषायपानवद्विरसा-
द्देवतान्तरार्च्चनात्, पुण्डरीकाक्षमिति विकृतभयङ्करदेवतान्तरस्तो-
त्रात्, स्तवैरिति वहुलायासज्योतिष्टोमादेश्चोत्कर्षः, नर इति
द्विजत्वादिनियमस्यैकवचनेन वहुसहकारि नियमस्य । सदेति-देश-
कालविशुद्ध्यपेक्षायाश्च निवृत्तिः सूच्यते । भक्त्या विभिन्नतया स्वा-
मित्वबुद्ध्यत्येके । भीष्मेणोक्तोऽयं नाम्नां महोत्कर्षस्तेषां भगवद्रूपत्वा-
देव वोध्यः । "आस्य जानन्तो नाम चिद्विविक्तनमहस्ते विष्णो सुमतिं
भजामहे ॐ तत्सदिति" श्रुतेः । "नाम-चिन्तामणिः कृष्णश्चै-
तन्यरसविग्रहः । पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामि-
नोरिति" पद्याच्च । अतएव नामिवन्नाम्नां शक्तिः । "अवशेनापि
यन्नाम्नि कीर्त्तिते सर्व्वपातकैः । पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगै-
रिवेति" वैष्णवात् । "अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ।
यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेरिति" श्रीभागवताच्च दुःसा-

परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥९॥
पवित्राणां पवित्रं यो मङ्गलानाञ्च मङ्गलम् ।
दैवतं देवतानाञ्च भूतानां योऽव्ययः पिता ॥१०॥
यतः सर्व्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥११॥

ध्यैस्तीर्थाटनादिभिर्मुक्तिं ब्रूवच्छात्रं तु नामप्र-भावानभिज्ञानधिकृत्य सावकाशम् । यत्तु "जपस्तु सर्व्वधर्म्मेभ्यः परमो धर्म्म उच्यते । अहिंसया च भूतानां जपयज्ञःप्रवर्त्तत" इति भारतवचनाद्धिंसावैधुर्य्यान्नाम संकीर्त्तनस्य महत्तमाहुस्तदपि तदनभिज्ञवचनानुवादतया नेयम् ॥८॥

द्वितीयस्योत्तरमाह परममिति – यः पुरुषोत्तमः परमं महत्, पारम्येण पूज्यं वस्तु, यः परमं तेजः तेजस्विनां सूर्य्यादीनां तेजःप्रदं वस्तु, यो महत्तपः तादृशानां तेषां प्रशास्तवस्तु । "यद्भीषा वातः पवते भीषोदेति सूर्य्यः भीषास्मादग्निश्चन्द्रश्च मृत्युर्धावति पञ्चम" इति श्रवणात् । यः परमं महत् विभुरस्त्वित्यर्थः । यः परमं ब्रह्म यः परमयनं सर्वाश्रयभूतं वस्तु ॥९॥

हिंसावलोकेन प्रथमस्य पुनरुत्तरमाह पवित्राणामिति । अत्रापि परममित्यनुवर्त्तते । पवित्राणां पापहन्तॄणां गङ्गादितीर्थानां यः परमं पवित्रं वस्तु, तदपहर्त्तृत्वशक्तिप्रदमित्यर्थः । मङ्गलानां विघ्ननाशकानां गणेशादीनां यः परमं मङ्गलं तन्नाशकत्वशक्तिप्रदं वस्त्वित्यर्थः । देवतानां सर्व्वाराध्यानां विरिञ्चयादिनां यः परमदैवतं पारम्येणाराध्यं वस्तु । यत् सम्बन्धाद्यदाराधनाच्च तेषां तत्तदितिभावः । यो भूतानां सर्व्वेषां पिता जनकः पालकश्च । अव्यय इत्याधुनिकपितृभ्यो विशेषः ॥१०॥



तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नाम सहस्रं मे शृणु पापभयापहम् ॥१२॥
यानि नामानि गौणानि विख्यातानि महात्मनः ।
ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥१३॥

तस्यासाधरणधर्म्ममाह यत इति – आदियुगागमे सर्व्वकाले युगक्षये प्रलयकाले च शब्दान्मध्ये येन तानि पाल्यन्त इत्युक्तम् । जगज्जन्मादिहेतुत्वमीश्वरस्य लक्षणमित्याह भगवान् सूत्रकारः– "जन्माद्यस्य यत" इति ॥११॥

तस्योक्तलक्षणस्य विष्णोर्नाम सहस्रं मे मत्तः शृणु । भूपते हे युधिष्ठिर ! कीदृशमित्याह पापेति पापं भयं च यद्धेतुकमपहन्यादित्याशंसनीयं, आशिषि हन इति सूत्राड्डः । तस्य कीदृशस्येत्याह लोकेति वेदादिशास्त्रे प्रधानस्य प्राधान्येन सर्व्वेश्वरत्वेन निरूप्यस्य अतो जगन्नाथस्य जगद्वर्त्तिभिर्देवमानवाद्यैः पुरुषार्थदातृत्वेन याचनीयस्य इत्यर्थः ॥१२॥

विष्णुनाम्नां साकल्येन कथनं न सम्भवेदिति भावेनाह–यानीति, गौणानि गुणेभ्य आगतानि तत आगत इति सूत्रादण् कर्म्मोपलक्षणमेतत् गुणकर्म्मप्रवृत्तिनिमित्तकानि न तु डित्थादिशब्दवत्संज्ञामात्रानीत्यर्थः । तेषु यानि विख्यातान्यतिप्रसिद्धानि महात्मनो विष्णोः । ऋषिभिर्मन्त्रैस्तद्द्रष्टृभिश्च परिगीतानि पारमार्थिकतया कथितानि । भूतये पुरुषार्थचतुष्टयलाभाय । एतदत्र वोध्यं स्वयं भगवान् श्रीकृष्णः परब्रह्मशब्दितो वैदूर्य्यवदनादिसिद्धनारायणवासुदेवादिरूपश्चकास्ति । "एको वशी सर्व्वगः कृष्ण ईड्य एकोऽपि सन् वहुधा योऽवभातीत्यादि" श्रुतेः । "कृष्णस्तु भगवान् स्वयमिति" स्मृतेश्च । आविर्भूतसर्व्वशक्तिः स्वयं रूपः, प्रायस्तत् समो विलासो

**ॐविश्वं विष्णुर्वषट्कारो भूतभव्यभवत् प्रभुः ।**
**भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥१४॥**

नारायणः । अनाविर्भूतसर्व्वशक्तिव्यूहः स्वांशः कला चेत्युच्यते । वासुदेवः प्रकृत्यस्पर्शी संकर्षणप्रद्युम्नानिरुद्धास्त्रयः क्रमात् कारणोदगर्भोदक्षीरोदनिलयाः पुरुषावताराः प्रकृत्यनुग्राहिणः । गर्भोदशयादेव मत्स्यकूर्म्मादयो लीलावतारा भवन्त्येवं मन्वन्तरावतारा युगावताराश्च पुराणेषु प्रसिद्धाः । तत्तु सर्व्वात्मा कृष्ण एवेति तत्त्वम् । तद्वराद्विद्वान् भोष्मस्तत्तद्धाम-परिकर-विशिष्टस्य तत्तद्रूपस्य तस्य नामान्युपदिष्टवान् । स्फुट-कर्म्म निमित्तानि स्फुटार्थतया रहस्य-कर्म्मनिमित्तानि तु रहस्यार्थतयैवावोचत् येषां ब्रह्मादि-शब्दानां चतुर्म्मुखादिषु योगेन मुख्यवृत्तिस्तेषामिह भगवति महायोगेन परममुख्यवृत्तिः । यथा भूपादिशब्दानां मण्डलाधिपादिषु सार्व्वभौमादिषु च मुख्यवृत्तिः परममुख्यवृत्तिश्च । तेन तेनेति केषाञ्चित्त्वन्यत्र रूढ़ानामपि विद्वद्रूढ्या हरौ वृत्तिः । नाम्नां निरुक्तिश्च द्वेधावैयाकरण्यार्षी चेति इह ताभ्यो निरुक्तिभ्योऽन्याश्च निरुक्तयः केषाञ्चिन्नाम्नां भारतादिषु दृश्यन्ते ता अपि ग्राह्या ग्रन्थविस्तरभयान्नादत्ताः । विष्णवादिनाम्नां पुनरुक्तानामप्यर्थभेदान्न पुनरुक्तिः । श्रीधरमाधवादि नाम्नामर्थैक्येऽपि स्वरूपभेदान्न सा इत्यर्थ । पुनरुक्तिस्तु न दोषाय सर्व्वेषां नाम्नां पृष्टैकदैवतविषयत्वादित्युपोद्घातः ॥१३॥

अथ पूर्णत्वपारमैश्वर्य्ययोर्धर्मयोर्धर्म्मि तृष्णावर्द्धकत्वात्तद्बोधकान्यादौ कतिचिन्नामान्याह ॐविश्वमित्यादिना । आदावन्ते च भगवदात्मकेन प्रणवेन संपुटितत्वादस्य स्तोत्रस्यमन्त्रात्मकत्वम् । अन्ते नमः शब्दाच्चतुर्थ्यन्तेन प्रत्येकनाम्ना विष्णौ तुलस्यर्पणपूर्व्वकप्रणतिलक्षणं पुरश्चरणमनेन भवतीति च सूच्यते । विश्वादि-शब्दानां संज्ञात्वेन सर्व्वनामत्वाभावाच्चतुर्थ्यां विश्वायेत्यादीनि रूपाणि वोधानि अत्र



**पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।**
**अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥१५॥**

स्त्री-पुं-नपुंसकलिङ्गाः शब्दाः पठ्यन्ते तैः क्रमेण देवतादेव दैवतानि विशेषणीयानीति वोध्यम् । विशति स्वेतरेषु सर्व्वेषु तत्त्वेष्विति विश्वं विशेः क्वणिप् । वेवेष्टि व्याप्नोति तानीति विष्णुः विषेः किच्चेति नुप्रत्ययः कित्संज्ञः यस्मिन् षट्क्रियते । यमुद्दिश्य हविस्त्यजते स वषट्कारः सर्व्वयज्ञाराध्य इत्यर्थः । वाहुल्यकात् प्रत्याहारशब्दवदधिकरणेऽर्थे घञ् । यतो भूतभव्येति भूतानां भव्यानां भवताञ्च प्रभुः । त्रैकालिकानां प्राणिनां स्वामीत्यर्थः । भूतादिभावेन त्रिविधस्य कालस्य प्रभुर्नियन्तेत्येके । भूतानि खादीनि करोत्युत्पादयतीति भूतकृत् । भूतानि तानि विभर्त्ति संकल्पेनैव धारयतीति भूतभृत् । चिदचिच्छक्तिमान् प्रपञ्चात्मना भवतीति भावः । भवतोश्चति वृत्तिर्णः "सो कामयत वहुस्यां प्रजायेयेति" श्रुतेः । भूतानां चिज्जड़ात्मकानां स्वांशेन प्रवर्त्तकत्वाद्भुतात्मा । भूतानि तानि भावयति शक्त्या संपदा च भावितानि करोतीति भूतभावनः ॥१४॥

पूतो भूतकर्त्तृत्वेपि तत्सङ्गशून्य आत्मा यस्य स पूतात्मा । परमो नित्यश्रीक आत्मा यस्य स परमात्मा । मुक्तानां नित्यनिवृत्ततमसामुपायनिवृत्ततमसाञ्च जीवानां परमा गतिः प्राप्यभूतः । परमेति विशेषणेन तद्विभूत्यपेक्षया तत्स्वरूपे रुचिनिर्भरः । अत्र परेशान्मुक्तानाञ्च मिथोऽन्यत्वाभिधानादात्मैक्यवादो निरस्तः । न व्येति मुक्तवात्सल्यादित्यव्ययः । पचाद्य च् । पुरूणि फलानि सनोति ददाति मुक्तेभ्यः पुरुषः । अन्येष्वपि दृश्यते इति डः । साक्षात्कररस्थवत्सर्व्वं पश्यतीति साक्षी । क्षेत्राणि सर्व्वजीवशरीराणि जानाति युगपदिति क्षेत्रज्ञः । "क्षेत्राणि हि शरीराणि वीजं चापि शुभाशुभे । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते" इति स्मरणात्स्वरूपतः

**योगो योगविदां नेता प्रधानपुरुषेश्वरः ।**
**नारसिंहवपुः श्रीमान् केशवः पुरुषोत्तमः ॥१६॥**
**सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।**
**सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥१७॥**

स्वभावतश्च न क्षरति च्यवत इत्यक्षरः ॥१५॥

युज्यते मनोऽस्मिन्निति योगः समाधेः शुभाश्रयः । अकर्त्तरि च कारके संज्ञायामिति अधिकारहनश्चेति घञ् । योगं चित्तवृत्तिनिरोधं ये विन्दते विचारयन्ति ते योगविदस्तेषां नेता योगप्रापकः । प्रधानं प्रकृतिः पुरुषाः क्षेत्रज्ञा जीवास्तानीष्टे नियमतीति प्रधानपुरुषेश्वरः । नारसिहं वपुर्यस्य स नारसिंहवपुः भक्तत्राणाय दिव्यनृसिंहः । मिथो दुर्घटापूर्व्वभयङ्कररूपवत्वेऽपि श्रीमानतिमनोज्ञकान्तिकः । "श्रीर्वेशरचनाशोभेति" विश्वः । केशयोर्विधिरुद्रयोजनकत्वात्केशवः । "क इति ब्रह्मणो नाम ईशोऽहं सर्व्वदेहिनाम् । आवां तवाङ्गसम्भुतौ तस्मात्केशवनामभागिति" रुद्रवचनात् । पुरुषेषु वद्धमुक्तावस्थेषु जीवेषूत्कृष्टतमत्वात्पुरुषोत्तमः । यथा "यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम" इति स्मरणात् ॥१६॥

सरति गच्छति व्याप्नोतीति सर्व्वः सरतेर्वन् । "सर्व्वं समाप्नोषि ततोऽसि सर्व्वं" इत्यर्जुनोक्तेः । शृणोति हिनस्त्यशुभानि स्मृतः सन्निति शर्व्वः पूर्व्ववद्वन् । अतः शिवः कल्याणात्मा शीङो वन् ह्रस्वत्वं गुणाभावश्च निपातनात् । मङ्गलानाञ्च मङ्गलमित्युक्तम् । अनुकम्पायां स्थिरत्वात्स्थाणुः । अतो भूतादिः भूतैः प्राणिभिरादीयते शुभदत्वेन गृह्यते । उपसर्गेद्योः किः, अनर्घ्यरत्नवच्चित्ते निधीयते इति निधिः । सर्व्वैर्नित्यमुपजीवमानत्वेऽपि कलयाप्यनूनत्वादव्यय इति निधिविशेषणम् । साधुत्राणाय सम्यगप्रच्युतस्वरूपस्वभावतया मत्स्यादिरूपेण भवः प्राकट्यं यस्येति सम्भवः । "परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्म्मसंस्थापनार्थाय संभवामि युगे युगे" इति स्मरणात् । भावयति चिन्तयति साधूनेवमेतान् रक्षिष्यामीति भावनः । यतो निरन्ध्रवरमपि हिरण्यकशिपुं रन्ध्रमनुसन्धाय निजघान, नानोपायैः पाण्डवान् वर्द्धयामास । विभर्त्ति पुष्णाति तान् स्वानन्ददानेनेति भर्त्ता । प्रकृष्टः स्वभक्तानां स्वेन रूपेणाभिव्यक्तीलक्षणो भवो यस्मात् स प्रभव "स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत" इति श्रुतेः । कर्म्मतन्त्रमनुष्यादिसाम्येनावतरन्नपि देवाद्यशक्यकार्य्यकरणात्प्रभुः । यथा गुरुपुत्र-विप्रपुत्राणां तथैवानयनं परीक्षितो ब्रह्मास्त्रदग्धस्योपजीवनं घण्टाकर्ण–जरादीनां कुत्सितानां दिव्यपदार्पणं, युधि निहतानां मोक्षार्पणं चेति मनुष्यादि--वेशोऽपि ब्रह्मादिनियमनादीश्वरः "ईशस्त्वं सर्व्वभूतानामीश्वरोऽसि सदा स्मृत" इति शिवोक्तेः ॥१७॥



**स्वयम्भूः शम्भुरादित्यः पुष्कराक्षो महास्वनः ।**
**अनादिनिधनो धाता विधाता धातुरुत्तमः ॥१८॥**

स्वयं निजेच्छयैव भवति प्राकट्यमेतीति स्वयम्भूः । भुवः संज्ञान्तरयोरिति क्विपि । "कविर्मनीषीपरिभुः स्वयम्भूरि"ति मन्त्रवर्णाश्च । शं सुखं भावयति जनयति कल्याणगुणप्रकाशेनेति शम्भुः मितादद्वादित्याड्डुः । आदित्यो निवासोऽस्येत्यादित्यः । दित्यदित्यादित्येत्यादि न्यः । "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत" इतिश्रुतेः । पुष्करमाकाशमक्ष्णोति व्याप्नोतीति पुष्कराक्षः । "व्योमपुष्करमम्बरमित्यमरः ।" "आकाशात्मे"ति श्रुतेश्च । महान्पूज्यो वेदलक्षणः स्वनोऽस्येति महास्वनः । "तस्य वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेद" इत्यादिश्रुतेः । उत्पत्तिविनाशविरहादनादि-

**अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।**
**विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥१९॥**

निधनः कारणत्वे विरिञ्च्यादिभ्यो विशेषमाह धातेति । अचित् समष्टौ प्रकृतियौनौ चित् समष्टे विरिञ्चिगर्भस्य धारणादित्यर्थः। तं गर्भं परिणमय्याविर्भावयतीति विधाता । "यो ब्रह्माणं विदधाति पूर्वं यो विद्यास्तस्मै ज्ञापयति स्म कृष्ण" इत्यादि श्रुतेः । "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् । सम्भवः सर्व्वभूतानां ततो भवति भारते"त्यादि स्मृतेश्च । अतो धातुरुत्तमः धातुर्विरिञ्च्यादपि जनकत्वादिनोत्कृष्टतम इत्यर्थः ॥१८॥

ब्रह्मादीनामिन्द्रियैः प्रमातुमशक्यत्वादप्रमेयः । "न ह्यादिमध्यान्तमजस्य यस्य विद्मो वयं सर्व्वमयस्य धातुरिति" ब्रह्मवाक्यात् । यतो हृषीकेशः हृषीकाणि तेषामिन्द्रियाणि ईष्टे नियमयतीति तथा । स चेत्तानि प्रेरयति तदा तेऽपि तं कथञ्चिद्विदन्तीति भाव उक्तं व्यञ्जयति पद्मनाभ इति ब्रह्म-प्रभवं पद्मं नाभावस्येति अच्प्रत्ययन्निति सूत्रेऽजितियोगविभागान्नाभेरच्। ब्रह्मादीनाममराणां सृष्ट्याद्यधिकारदानादमरप्रभुः । ब्रह्मादीनां स्रष्ट्रणामन्तःस्थः सन् सहकारीति विश्वकर्म्मा। स एवेदं सर्व्वमसृजदिति श्रुतेः। तत्तत्सर्व्वविषयकज्ञानवत्त्वान्मनुः। मन ज्ञाने तस्मादुः। त्वेषति नामरूपयोगं कुर्व्वन् दीप्यते तेन व्यक्तीकरोति भूतानीति त्वष्टा त्त्विषकान्तावित्यतो नप्तृ-नेष्टृ-इत्यादिना तृन् प्रत्ययउपधाया अत्यश्च निपात्वते । "सर्व्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवंदन्यदास्ते" इत्यादि श्रुतेः । शक्तिद्वारानेकब्रह्माण्डाकारत्वात् स्थविष्ठः। "निस्तारः सर्व्वभूतस्य विष्णोर्विश्वमिदं जगदिति" स्मृतेः । मृत्तिकादिकारणवैलक्षण्यमाह-स्थविर इति त्रिशक्तिवत्वविशेषेण सर्व्वं कालं स्थाष्णुरित्यर्थः। अजिर शिशिरेत्यादिना तिष्ठतेः किरचि निपातोऽयम् ।



**अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।**
**प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥२०॥**

अनन्त - परिणामेति तद्वेशादच्य बाद्ध्रुवः ध्रुवगतिस्थैय्ययोः तस्मात्कः । "व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य य" इति स्मृतेः । त्रिशक्तिकत्वञ्च - "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी-ज्ञान-वल-क्रिया च। प्रधान-क्षेत्रज्ञपतिर्गुणेश" इति श्रुतेः ॥१९॥

उपादानभूतोऽपि मृत्तिकादिरिवाधिष्ठेयो नेत्यग्राह्यः । ऋहलोर्ण्यत् । जगद्व्यापारप्रवाहात्मना नित्यत्वात् शाश्वतः । "अव्युच्छिन्नास्ततस्त्वेते सर्व्वस्थित्यन्तसंयमा" इति स्मृतेः । चिदानन्दात्मविग्रहत्वादतसीपुष्पप्रभत्वाच्च कृष्णः । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिसंज्ञकः । तयोरैकं परं ब्रह्म कृष्ण इत्यभिधीयते" इति "कृष्णोऽहमर्ज्जुनेति च" स्मृतेः । सर्व्वेषु नामसु मुख्यमिदं नाम "नाम्नां मुख्यतमं नाम कृष्णाख्यं मे परन्तपेति" स्मरणात् । आनन्दपूर्णतां द्योतयति ताम्र-राजीवपत्रनेत्रत्वात् लोहिताक्षः । समावृषभो लोहिताक्ष इति मन्त्रवर्णात् । "मदविघूर्णितलोचन ईषन्मानदः स्वसुहृदां वनमाली"ति स्मरणाच्च । भक्तवैमनस्यापहन्तृत्वात् प्रतर्द्दनः । तर्द हिंसायां ततो ल्युः । अथ परमव्योमाधिपतां सूचयन्नाह चतुर्द्दशभिः-परमर्द्धिनिषेवितत्वात् प्रभूतः । यतस्त्रिककुद्धाम "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवीति" मन्त्रवर्णात्त्रिपाद्विभूतिः । परमव्योमत्रिककुदुच्यते तद्धाम स्थानमस्येत्यर्थः । पूनाति स्मतॄनिति पवित्रम्। पूञ्पावने इत्यस्मात् कर्त्तरि - चर्षिदेवतयोरिति सूत्रात्त्रः । परममङ्गलमिति सविशेषणं नाम मगिगतौ तस्मादनच् "अशुभानि निराचष्टे तनोति शुभसन्ततिम् । स्मृतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुरिति" स्मरणात् । मङ्गलाय परस्मै नम इति चतुर्थ्यन्तं वोध्यं मङ्गलविशेषणत्वात् ॥२०॥

**ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।**
**हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥२१॥**
**ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।**
**अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥२२॥**

स्वेतरसमस्तवस्तुव्यवस्थापनशीलत्वादीशानः । ईशेस्ताच्छल्येऽर्थे-चानश् । पुमर्थसाधकान् प्राणानिन्द्रियाणि ददाति प्रथमपुरुषरूपेणेति प्राणदः । "बुद्धीन्द्रियमनः प्राणान् जनानामसृजत् प्रभुरित्यादि" स्मरणात् । प्राणित्युपजीवयति द्वितीयपुरुषद्वारेति प्राणः । "को ह्येवान्यात्कः प्राणाद्यदेष आकाश आनन्दो न स्यादिति" श्रुतेः । सर्व्वेभ्यः प्राग्वर्त्तित्वेनातिवृद्धत्वाज्ज्येष्ठः । वृद्धस्य ज्यः । महागुणत्वेनातिप्रशस्तत्वाच्छ्रेष्ठः प्रशस्यस्य श्रः । साधनसिद्धेभ्यश्च जीवेभ्यः प्रकटतया जायन्त इति निरुक्तेर्नित्यमुक्ता गरुडादयः प्रजास्तासां पतिः स्वामी नित्यं तदभ्यर्च्च्य इत्यर्थः । "यदक्षरे परमे प्रजा" इति श्रुतेः । हिरण्यवदभिलषनीयत्वात् त्रिपादविभूतिर्हिरण्यं तत्र गर्भवन्निवासाद्धिरण्यगर्भः, "हिरण्मये पुरे कोशे विरजं ब्रह्म निष्कलमित्यादि" श्रुतेः । तत्र तस्य नित्यं महिषीनिषेवितत्वमाह–भूगर्भो माधव इति । लीलाया उपलक्षणमेतत् भूर्द्रीक्षमाद्य परनाम्नी भूदेवी सा गर्भवदनुभवेन भरणीयास्येति भूगर्भः । मा लक्ष्मीस्तस्या धवः पतिरिति माधवः । "श्रीश्च ते लक्ष्मीश्च पत्न्यावि"ति श्रुतेः । मधुं स्मर्त्तॄनां संसारं निसूदयति मधुसूदनः । "मधुः संसारनामेति ततो मधुनिसूदन" इति शिवोक्तेरिति ॥२१॥

तत्तद्विहारेष्वप्रतिहतेच्छुत्वादीश्वरः, सत्यकामः सत्यसंकल्प इति श्रवणात् । इच्छाविद्यातर्कविमर्द्दिस्वभावत्वाद्विक्रमो, तादृग्विक्रमानुरूपं दिव्यः धनुरस्यास्तीति धन्वी, ब्रीह्यादित्वादिनिः । तत्तद्वि-



**सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।**
**अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥२३॥**

हारानुगुणस्थिरप्रज्ञत्वान्मेधावी । अस्मायामेधास्रजो विनिः । विना पतङ्गेन्द्रेण गरुडेन क्रमोऽभिमतदेशेषु गतिरस्येति विक्रमः । तत्तद्भोग्यगन्धरसादिसंयोजनपरिपाटीतत्तन्निखिलभोगशक्तिश्च क्रमः, स नित्यमस्यास्तीत्यर्श आद्यच् । "क्रमः शक्तौ परिपाट्यामि"ति विश्वः । अतोऽनुत्तमः सर्व्वोत्तमः "न तत्समश्चाभ्यधिकश्च दृश्यत" इतिश्रुतेः । "मत्तः परतरं नान्यदिति" स्मृतेश्च । अतो दुराधर्षः स्वैतरैः सर्व्वैराधर्षयितुमज्ञातुमशक्यः । अत्र दुरिति निषेधे । दुर्भाग्यस्य दरिद्रतेत्यादिवत् । कृतं पत्रपुष्पाद्यर्पणं जानातीति कृतज्ञः । "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन" इति वचनात् । करोति जीवानकर्म्मप्रवृत्तानिति कृतिः । ति च क्तौ च संज्ञायामिति सूत्रात् कर्त्तरि क्तिच । प्रकरोतीति प्रकृतिवत् । श्रुतिश्चैवमाह–"एष ह्येव साधु कर्म्म कारयत्या"द्या । आत्मानो जीवा नित्यं प्रवर्त्तनीयाः सन्त्यस्येत्यात्मवान् ॥२२॥

सुष्ठु राति ददातीति सुराः सत्पात्रदानिनस्तेषामीशस्तथा दाने प्रवर्त्तकः । शीर्य्यन्ते दुःखानीति शरणं करणाधिकरणयोश्चेति ल्युट् । अविशेषेण सर्व्वाश्रय इत्यर्थः । सर्व्वस्य शरणं सुहृदिति मन्त्रवर्णात् । आनन्दरूपत्वात् शर्म्म "आनन्दो ब्रह्मेति श्रुतेः ।" विश्वं चित्परमाणुवृन्दं रेतो वीर्य्यं यस्य स विश्वरेताः । अतः प्रजाभवः, भवन्त्यस्मादिति भवः । ऋदोरप् मम योनिर्महद्ब्रह्मेत्यादिवाक्यात् । न जहाति स्वभावं स्वभक्तान् वेत्यहः । नञि जहातेरिति सूत्रात् । यद्वा अनाद्यविद्यानिद्रायां निमग्नानां जागरहेतुत्वादहरिवेत्यहः । तत्तो ज्ञानं हि जीवानामित्युद्धववाक्यात् । लब्धजागराणां तेषामुद्धाराय संवसतीति सम्बत्सरः । संपूर्व्वाद्वसेः सरः, सस्य तः । "तेषामहं समु-

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥२४॥

द्धर्त्ता मृत्युसंसारसागरादिति" स्मृतेः । विशेषेणानातितानात्मसात् करोतीति व्यालः । आतश्चोपसर्गे इति कः । प्रतीयते विश्वस्य तेनेति प्रत्ययः । वाहुल्यात् करणेप्येरच् । "ददामि बुद्धियोगं तं येन मामुपयान्ति त" इति स्मृतेः । यथा तैः शास्त्राद् गुरुमुखाच्च प्रतीतिस्तथैव सर्व्वं स्वरूपगुणादिकं दर्शयतीति सर्व्वदर्शनः । 'पश्यन्ति मे रुचिराण्यङ्ग सन्तः प्रसन्नवक्त्रारुणलोचनानि । रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहनीयां वदन्तीति" स्मरणात् ॥२३॥

तेषां स्वप्राप्तिप्रतिकूलान् क्षिपतीत्यजः । अाजगतिक्षेपनयोस्तस्मादच् । वाहुल्यकाद्वीभावो । न तेषां सर्व्वाणि चक्षुरादीनि करणान्याश्वश्नुते व्याप्नोतीति सर्व्वेश्वरः अश्नुतेराशन्तकर्म्मणि वरच् । उपधाया इत्यश्च तेषु परिनिष्पन्नस्यात्मनोऽभिव्यंजनात् सिद्धः । निःसीमातिशयफलरूपत्वात् सिद्धिरुपायैस्तस्याभिव्यक्तीकरणाद्वा । भवत्याहमेकया ग्राह्य इत्यादिस्मृतेः । सर्व्वेषां भक्तवाञ्छितानां मूलत्वात् सर्व्वादिः । "स्वर्गापवर्गयोः पुंसां रसायां भूवि सम्पदाम् । सर्व्वासामपि सिद्धीनां मूलं तच्चरणार्च्चनमिति" स्मरणात् ॥

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
प्रथमं नाम–शतकं व्याख्यातम् ॥

स्वभक्तेभ्यो न च्यवते स्म नापगतो भवतीत्यच्युतः । च्युङ्गतावित्यस्मात् कर्त्तरि क्तः । "तस्याहं न प्रणश्यामि स च मे न प्रणश्यतीति" स्मरणात् । वर्षति साधूनामभीष्टानीति वृषः । इगुपधत्वात्कः । आकम्पयत्यसाधूनित्याकपिः कुण्डकुम्प्योर्न लोपश्चेति सूत्रादाकम्पे रि प्रत्ययः । ततः कर्म्मधारये वृषाकपिः । अमेय इत्यानिति परिच्छेत्तुमशक्य आत्मा बुद्धिर्यस्य सोऽमेयात्मा । सर्व्वैः



वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥२५॥
रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुर्वरारोहो महातपाः ॥२६॥

प्राकृतैर्वस्तुभिर्योगः संपर्कस्ततो विनिःसृतस्तदसंपृक्त इत्यर्थः ॥२४॥

वसति भक्तेष्विति वसुः । वसिश्रृ इत्यादि सूत्रादुः, "मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारदेति" स्मृतेः । वसुष्वकिञ्चनभक्तधनेषु मनो यस्य स वसुमनाः । अग्निधनरश्मिरत्नत्रिदशविशेषु भवति वसुशब्द इति हलायुधः । "नमो ऽकिञ्चनवित्तायेति" स्मृतेश्च । सत्सु भक्तेषु साधुः सत्यः । पाण्डित्यादिभिर्गुणैर्विषमेष्वपि भक्तेषु तुल्यमनस्कत्वात् समात्मा, करस्थवत् तैः परिमितत्वात् संमितः, हस्ते गृहीत्वाभिषयन्त्य वागुरदित्यादि स्मरणात् । यथाधिकारं स श्रीकतया तेष्वभिव्यक्तेः समः, सर्व्वेभ्योप्यभीष्टप्रदानादमेयः, "आमोघा भगवद्भक्तिर्नेतरेति मतिर्ममेति" स्मरणात् । दहराख्यं तेषां हृत्पुण्डरीकमक्ष्णोति व्याप्नोतीति पुण्डरीकाक्षः । वृषाणि भक्ताभीष्टवर्षीणि कर्म्माण्येस्येति वृषकर्म्मा । वृषु सेचने । वृषा सौन्दर्य्येण दृगाप्यायिकाकृतिरस्येति वृषाकृतिः "विभ्रद्वपुः सकलसुन्दरसन्निवेशं कर्म्माचरन् भुवि सुमङ्गलमाप्तकाम" इत्युभयत्र स्मृतेः ॥२५॥

प्राणिरुजां निराकरणाद्रुद्रः । रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्द्दन इति स्मरणात् । सहस्रमूर्द्धत्वाद्बहुशिराः । सहस्रशीर्षा पुरुष इति श्रुतेः । जगद्बिभर्त्तीति बभ्रुः भृञ् कुर्द्वित्यश्च, विश्वेषां भक्तानां स्वेन सह मिश्रणाद्विश्वयोनिः । मिश्रणार्थाद्यौतेर्निः, पवित्रभक्तोक्तिश्रवणात् शुचिश्रवाः "शुचीनि श्रवणीयानि शृणोमीह धनञ्जय । न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवा" इति

सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥२७॥
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥२८॥

स्मृतेः । जरामरणनिवारकत्वादतृप्तिकरणत्वाच्चामृतः । समुद्रसाराद-मृताद्विशेषमाह – शाश्वतः स्थाणुरिति । स्वयं नित्यः स्वसेविनां सर्व्वदा भोग्यश्चेत्यर्थः । तद्वचनित्यं सकृद्भोग्यश्च । अतो वरा-रोहः, वरः पुनरावृत्त्यभावादुत्कृष्टः प्राप्तिलक्षण आरोहो यस्य सः न च पुनरावर्त्तनश्रवणात् । अथ कारणोदशायितां व्यञ्जयन्नाह द्वाभ्याम् । महत् प्रकृतिक्षोभक्षमं तपो यस्य स महातपाः । तप आलोचने ॥२६॥

सर्व्वां चतुर्विंशतिविधां प्रकृतिं गच्छति व्याप्नोतीति सर्व्वगः । गर्भोदशायितां सूचयन्नाह द्वाभ्याम् । सर्व्वाणि सृज्यानि विन्दति सृष्ट्या लभते इति सर्व्ववित् । सर्व्वं निर्म्मिमाणोप्यविकृतो भातीति भानुः । अथ क्षीरोदशायितां सूचयन्नाह सप्तभिः । विष्वक् सर्व्वत्र सेनास्य विष्वक् सेनः । इनेन प्रभुना सहिताः सेनाः पार्षदाः पालनार्थं यस्य सर्व्वत्र सन्तीत्यर्थः । पालनविरोधिनो जनानर्द्दयति मारयतीति जनार्द्दनः अर्द्द–हिंसायां । जनैरर्द्दते याच्यते सौख्यमयमिति वा । अर्द्द गतौ याचने च । वेद ऋगादिरूपः वेदो नारायणः साक्षा-दित्यादि स्मृतेः । वेदमक्षरतोऽर्थतश्च वेत्तीति वेदवित् । "वेदान्तकृद्वेद-विदेव चाहमि"ति स्मरणात् । शिक्षाद्यङ्गै रहीनत्वादव्यङ्गः । वेदो-ऽङ्गं ज्ञापकमस्य वेदाङ्गः । "नावेद-विन्मनुते तं वृहन्तमिति" श्रुतेः । वेदवित्तं विचारयति उद्ध्र्ववाहुर्वेदमावर्त्ततीति नारायणीये प्रस्ता-वात् । क्रान्तदर्शित्वात् कवि. क्रान्तदर्शितामाह त्रिभिः ॥२७॥



भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥२९॥
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः संग्रहः सर्गो धृतात्मा नियमो यमः ॥३०॥

लोकधर्म्मिष्ठा ब्राह्मणादयः सुरा धर्म्माराध्या देवाः धर्म्मा अग्नि-होत्रादयः तेषां सर्व्वेषामध्यक्षः । धर्म्माननुष्ठाप्य तदर्चितैः सुरैर्धर्मा-नुष्ठातृभ्यः फलदायीति भावः । अथ वासुदेवतां सूचयन्नाह–केन कृताकृतः कृतेन कार्य्येण सहाकृतो न जातः प्रकृत्यस्पर्शीत्यर्थः । एवं चतुरात्मा सङ्कर्षणादि चतुर्विधवपुः । ननु कथमेकस्य चतुरात्म्यं तत्राह चतुर्व्यूहः । तत्तत्कार्य्याय प्रकटितैः समस्तैर्व्यस्तैश्च षड्भिरै-श्वर्य्यैश्चातुर्विध्येन व्यूह्यते ज्ञायते इत्यर्थः । हलश्चेति कर्म्मणि घञ् । चतस्रो दंष्ट्रा अस्येति चतुर्द्दंष्ट्र । चतुर्द्दंष्ट्रत्वं महापुरुषलक्षणं "चतु-र्द्दश समद्वन्धश्चतुर्द्दंष्ट्रश्चतुर्गतिरिति" स्मरणात् । अथ त्रिमूर्त्तिमध्ये विष्णुरूपतां सूचयन्नाह–चतुर्भुज इत्यादिभिरेकादशभिः ॥२८॥

भ्राजिष्णुरतिदीप्तः । भुज्यतेऽनेनेति भोजनं जीविकाप्रद इत्यर्थः । भुनक्ति पालयति शिष्टानिति भोक्ता । दुष्टान्न सहत इत्यसहिष्णुः । जगदादिषु त्रिष्वन्यतमत्वेन जायते इति जगदादिजः । सप्तम्यां जनेर्डः । "यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी । क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्तादिति" स्मृतेः । एवं प्रपञ्चमध्ये जनित्वाप्यनघः पापविनाशी । गुणावतार-त्वेन ब्रह्मरुद्रतुल्योपि विजयस्तदभ्यधिकतया विराजमानः । अतो जेता स्वाभिमते कर्म्मणि तयोः स्थापकः । "एतौ तो विवुधश्रेष्ठावि" त्यादि स्मरणात् । स्वांशिरूपेण विश्वस्योपादानमिति विश्वयोनिः । पुनः पुनर्देवकार्य्याय वसतीति पुनर्वसुः ॥२९॥

**वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।**
**अतीन्द्रियो महामायो महोत्साहो महाबलः ॥३१॥**

अथ वामनरूपतां सूचयन्नाह द्वादशभिः—अनुजत्वेपि गुणैरिन्द्राधिक्यादुपेन्द्रः । "द्वादशैवादिते पुत्राः शक्रमुख्या नराधिप । तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिता" इति स्मृतेः । इन्द्रोपकृतिफलाय वलिछलायातिविचित्रह्रस्ववटुवेषत्वाद्वामनः । त्रिलोकीमाक्रमयितुमत्युच्चत्वात् प्रांशुः । "तोये तु पतिते हस्ते वामनोऽभूदवामनः । सर्व्वदेवमयं रूपं दर्शयामास वै भूरिति" स्मरणात् । नास्त्यमोघो व्यर्थोस्तेत्यमोघः । वलिशक्रयोरुभयोः साम्येनार्थार्पणात् । तादृशेप्युपकारि प्रत्युपकारैरपेक्ष्यात्शुचिः । वामनमभिभवितुमुद्यते वलिसैन्ये शौर्य्याविष्कारादूर्जितः । शक्त्या शत्रुमतिक्रम्य स्थितत्वाततीन्द्रः । शक्रेण भक्तिमता सम्यग् गृह्यते इति संग्रहः । गृहवृध इत्यादि सूत्रादप् । सृज्यते आदित्यास्वविधेयः क्रियते इति सर्गः, हलश्चेतिघञ् । धृतः सुखदानेन वशीतआत्मा शक्रादेर्मनो येन स धृतात्मा । नियमयनि स्वस्वाधिकारेषु देवानिति नियमः । तानन्तः प्रविश्य यच्छतीति यमः ॥३०॥

क्षीरधिमथनाविर्भूततां सूचयन्नाहाष्टादशभिः । शक्रादिभिः स्वदरिद्रापहर्त्तृतया वेदितुमर्ह्यो वेद्यः । सुधामादाय धन्वन्तरिवपुषाविर्भावाद्वैद्यः । देवहिताय नित्यमुपायित्वात् सदायोगी । अनृताय युध्यमानान् वीरान् सुरान् हतवानिति वीरहा । अत्र हन्तेः क्विवार्षः । ब्रह्मभ्रूणवृत्तेषु क्विविति सूत्रे ब्रह्मादिष्वेव हन्तेरेवभूते एव क्विवेति चतुर्विधनियमेन वीरोपपदाद्धन्तेः क्विपोप्राप्तेः । एवमग्रे कामहादयोऽपि वोध्याः । वेर्गरुड़स्येरैः पक्षैर्हन्त्यसुरानिति वा वीरहा "सुपर्णपक्षाभिहता निपेतुर्दानवर्षभा" इति स्मरणात् । सर्व्वविद्यास्वामित्वान्माधवः । "मा विद्या च हरे प्रोक्ता तस्यामीशो यतो भवान् ।



**महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।**
**अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥३२॥**

तस्मान्माधव नामासि पूर्व्वमसीतिशब्दित" इति शिवोक्तेः । क्षीरोदमथनादाविर्भूतया मा लक्ष्मीपतित्वेन वृतत्वादित्येके । तत् सौन्दर्य्यलावण्ययोः लक्ष्म्यादिभिः स्वादितत्वान्मधुः । मन ज्ञान इत्यस्मात् स्त्राद्वर्थात् फलपाटित्यादिसूत्रेण उप्रत्ययोधश्चान्तादेशः । सुरेभ्यः सुधां पाययित्वातिरोधनादतीन्द्रियः । महती दैत्यमोहिका मायाऽस्य मोहिनीवेषस्येति महामायः । देवकार्य्यसिद्धये महानुत्साहोऽस्येति महोत्साहः । महद्बलं मोहनसामर्थ्यमस्येति महाबलः ॥३१॥

महतीदमेव साधयिष्यामीति निश्चयरूपाबुद्धिरस्येति महाबुद्धिः । महत् सुरकार्य्यनिष्पादकममृतोत्थापकं वीर्य्यं शौर्य्यमस्येति महावीर्य्यः । महती दैत्यधीवशीकरणक्षमाशक्तिरस्येति महाशक्तिः । क्षीराब्धिमथने सुरासुराणामवसादे सति स्वयमेव तं निमथ्नन् महाद्युतिः । यथा वर्णितं श्रीशुकेन—"मेघश्यामः कनकपरिधिः कर्णविद्योतिविद्युत् मूर्द्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः । जैत्रैर्दोर्भिर्जगदुभयदैर्द्दन्दशुकं गृहित्वा मन्थमथ्नन् प्रतिगिरिरिवा शोभताथो धृताद्रिरिति ।" अनिर्द्देश्यं कथमेतदेवमिति निर्देष्टुमशक्यं वपुरस्येत्यनिर्देश्यवपुः । श्रीर्वेषरचना मतिर्वास्ति प्रशस्तास्येति श्रीमान् । "शोर्वेषरचना–शोभा–भारती–सरलद्रुमे । लक्ष्म्यां त्रिवर्गसंपत्तौ वेषोपकरणे मताविति" विश्वः । अमेयः सर्व्वैः प्राणिभिर्देवादिभिरपि मातुं परिच्छेतुमशक्य आत्मा यतोऽस्येत्यमेयात्मा । "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनोसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपीति" मेदिनिकरः । एतदेवाह महाद्रिधृगिति । महान्तमद्रिं मन्दराचलं धर्जत्यधः कूर्म्मवपुषेति तथा । ऋजिर्गत्यर्थोप्यत्र धारणार्थो वोध्यः । धातुणामनेकार्थत्वस्वीकारात् ॥३२॥

**महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः ।**
**अनिरुद्धः सुरानन्दो गोविन्दो गोविदां पतिः ॥३३॥**
**मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।**
**हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥३४॥**

खण्डपालकतां सूचयन्नाह चतुर्भिः । महानिष्वासश्चापोस्येति महेष्वासः । दाशरथिवपुषा किं पुरुषवर्षं पालयंस्तद्वासिभिरुपास्य इत्यर्थः । मह्या भूमेर्भर्त्ता पतिरिति वराहमूर्त्तिरुत्तरकुरुवर्षं पालयंस्तद्वासिभिरुपास्य इत्यर्थः । श्रिया रतिनाम्न्या प्रियया सह केतुमालवर्षे निवसति कामदेववपुरिति श्रीनिवासः । तद्वर्षं पालयंस्तद्वासिभिरुपास्य इत्यर्थः । एवं सतां वर्षान्तरवर्त्तिनां भक्तानां पतिस्तत् पालकस्तैरुपास्य इति तत्तन्नामानि पञ्चमादिभिरवगम्यानि । अथ श्वेतद्वीपपतित्वं सूचयन्नाह षोड़शभिः । न केनाप्येकान्तभक्तिहीनेन निरुध्यते वशीक्रियते इत्यनिरुद्धः । सुरन्त्येकान्तभक्तितेजसा दीप्यन्त इति सुरास्तदेकान्तिनश्चन्द्रादित्यवर्च्चसस्तानानन्दयति सर्व्वदात्मसाक्षात्कारेणेति सुरानन्दः । सुर–ऐश्वर्य्य–दीप्त्योस्तौदादिकः । गावस्तेषां स्तुतिवाचस्ता विन्दतीति गोविन्दः । "दिद्गृष्टिदीधिति स्वर्ग-वज्रवाग्वाण-वारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिः दर्शसु स्मृत" इति हलायुधः । गावस्तदङ्गकिरणास्तान् विन्दत्युपासत इति गोविन्दस्तेषां पतिस्तदापि विघ्ननिवारकतया पालक इति गोविदां पतिः ॥३३॥

प्रकाशमयत्वान्मरीचिः, मृकलिभ्यामीचिः । दमयति विच्छेदतापं स्वध्यातॄणां कान्तिकन्दलीभिरिति दमनः । सनकादिभिः सारासारविवेके पृष्टे अप्राप्ततदुत्तरेण ब्रह्मणा चिन्तितस्तद्विवेकाय हंसवपुषाविर्भावाङ्ग सः । हन्ति तत्सन्देहमिति व्युत्पत्तिः । हन्ति गच्छति



**अमृत्युः सर्वदृक्सिंहः सन्धाता सन्धिमान्स्थिरः ।**
**अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥३५॥**

मनोहरमिति हंस इत्यन्ये । सुपर्णश्छन्दोमयो गरुड़ः, सोऽस्य वाहनतया नित्यमस्तीति सुपर्णः । अर्शआद्यच् । भुजगस्य शेषनागस्योत्तमः स्वामीति भूजगोत्तमः । शेषपर्य्यङ्कशायीत्यर्थः । हिरण्यवत् स्पृहनीयतया दर्शनीया नाभिरस्येति हिरण्यनाभः । पूर्व्ववदच् समासान्तः । शोभनानि तपांसि यस्य यस्मै वा स सुतपाः । पद्मनाश्चरणविदस्तदेकान्तिनो भक्तास्तैराभातीति पद्मनाभः । प्रजा विधिशिवादयस्तासामापत्सु पालकत्वात् प्रजापतिः ॥३४॥

उपासितः सन् मृत्युं निवारयतीत्यमृत्युः । स्वोपासकानां सर्व्वानुपायन् पश्यतीति सर्व्वदृक् । "यः सर्व्वज्ञ" इति श्रुतेः । सिञ्चत्युपासकानन्तिकागतान् कृपाकटाक्षसुधयेति सिंहः । सिञ्चेः संज्ञायां हनुमौकश्चेति सूत्रात्सिचेः कः स्यात्हकारोन्ता देशोनुमागमश्चेति तदर्थः । नारायणीयमन्त्रोदाहरणं मृग्यम् ॥

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
द्वितीयं शतकं व्याख्यातम् ॥

अथ श्रीदाशरथितां सूचयन्नाहाष्टादशभिः । विश्वामित्रेण मिथिलां नीतः सीतया सह पाणिग्रहणलक्षणात् संश्लेषात् सन्धाता । पितुराज्ञयारण्यं गतो रावणापहृतसीतार्थी सुग्रीवेण सह सख्यात् सन्धिमान् । स्वीयैर्निवार्य्यमाणोऽपि शरणागतविभीषणवात्सल्यताऽचलनात् स्थिरः । तदेवाह विभीषण-त्याग-फलकानि स्वकीयानां वचांसि क्षिपति गच्छति च तं मित्रत्वेनेत्यजः । "मित्रभावेन संप्राप्तं न त्यजेयं कथञ्चन । दोषो यद्यपि तस्मिन् स्यात् सतामेतद्विगर्हितम् । सकृदेव प्रपन्नो यस्तवास्मीति च याचते । अभयं सर्व्वदा तस्मै ददाम्येतद्व्रतं ममेति" तान् प्रति श्रीरामचन्द्रवाक्यात् । सेतुं निर्म्माय

**गुरुर्गुरुतमो धाम सत्यः सत्यपराक्रमः ।**
**निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥३६॥**
**अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।**
**सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥३७॥**

लङ्कां दग्ध्वा रावणं निहत्य सीतामानेष्यामीत्येव दुःशकं मर्षणं यस्य स दुर्म्मर्षणः । एवं प्रतिज्ञाय रावणं सगणं दण्डयामासेति शास्ता । एवं चरितैः प्रख्यातमूर्त्तित्वात् विश्रुतात्मा । सुरारीन् रावणादीन् हतवानिति सुरारिहा ॥३५॥

जगद्धितोपदेष्टृत्वाद्गुरुः । जगद् - गुरुणां विरिञ्चादीनामपि शिक्षकत्वाद्गुरुतमः । निखिलाश्रयत्वात् प्रभावमयत्वाद्वा धामः । सद्भ्यो विश्वामित्रादिभ्योहित इति सत्यः, उगवादिभ्यो यत् । सत्यः पारमार्थिकः पारमाक्रमोऽस्येति सत्यपराक्रमः । निमिषति वेदविरुद्धेषु कर्म्मस्विति निमिषः । तेषु निमीलितदृष्टिरित्यर्थः । वेदोक्तेषु कर्मसु न निमिषति किन्तु जागर्त्त्येवेत्यनिमिषः । वेदमर्य्यादानिवद्धाचार इत्यर्थः । स्रग्वैजयन्ती नित्यमस्यास्तीति स्रग्वी । स्रजो विनिः । सरस्वत्याः पालकत्वाद्वाचस्पतिः । गुहजटायुशवरीप्रभृतिभ्योऽवरेभ्योपि देवदुर्ल्लभपदार्पणादुदारधीः । एषूदाहरणानि तु श्रीश्रीरामायणभारतभागवतवचांसि मृग्याणि ॥३६॥

अथ मत्स्याकृतितां व्यञ्जयन्नाह षड्भिः । शृङ्गेन नावं वद्ध्वा तस्यां मन्वादीन् निधाय तामग्रं नयतीत्यग्रणीः । मन्वादीनां ग्रामं समूहं नयति नावि निधाय तेन सह क्रीड़तीति ग्रामणीः । श्रीर्वेदलक्षणा भारती रक्ष्यतया यस्य विद्यते स श्रीमान् । युक्तकारित्वान्न्यायः । परिण्योर्नीणोरित्यादि सूत्राद्घञ् । निर्व्वाहकत्वान्नेता । एवं सम्यक् शोभमीरणं चेष्टितं यस्य समीरण ईरगतौ कम्पने च



**आवर्तनो निवृत्तात्मा संवृतः सम्प्रतर्दनः ।**
**अहः संवर्तको वन्हिरनिलो धरणीधरः ॥३८॥**
**सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।**
**सत्कर्ता सत्कृतः साधुर्जन्हुर्नारायणो नरः ॥३९॥**

ततो ल्युः । एषूदाहरणानि त्वष्टमादिषु तदुपाख्यानानि मृग्याणि । अथ विश्वरूपतां सूचयन्नाह द्वादशभिः । सहस्राणि मूर्द्धाणोऽस्येति सहस्रमूर्द्धा । विश्वव्यापीत्वाद्विश्वात्मा । सहस्राक्षः सहस्रपादिति स्फुटार्थं एषु सहस्र-शब्दो ऽसंख्येयवचः "सर्व्वतः पाणिपादं तदि"-त्यादि ज्ञापकात् ॥३७॥

घटियन्त्रवत् संसारचक्रानावर्त्तयतीत्यावर्त्तनः । "तेनेदं भ्राम्यते ब्रह्मचक्रमिति" श्रुते । निवृत्त एकपादविभूतिरुद्गत आत्मा त्रिपाद्विभूतिलक्षणो यस्य निवृत्तात्मा "त्रिपादूर्द्ध्वउदैत् पुरुष" इति श्रुतेः । विषयासक्तान् प्रति गूढ़त्वात् संवृत्तः । स्वपथविमुखानसुरान् विहिंसन् संप्रतर्द्दनः । अहः शब्दलक्षितस्य कालस्य अपि ग्रासकत्वादहः । "सम्बर्त्तकः यः कालकालो भवत्" इति श्रुतेः । वहति देशरूपेण विश्वमिति वह्निः । वहि श्रीत्यादिना वहेर्निः । "प्राणेदस्येहाभवत् पुनरि"तिश्रुतेः । ईला प्रेरणा यस्य नास्ति सोऽनिलः । स्वयमेव शिष्टहिताय तथा प्रवृत्तः । सर्व्वधारिण्या भुवो धरणाद्धरणीधरः । "स दधार पृथिवीमुतेमामिति" श्रुतेः । विश्वरूपप्रकरणं चात्रोदाहरणं मृग्यम् । विश्वरूपप्रदर्शक इत्यष्टोत्तरशतनाम्नि ॥३८॥

वटपत्रशायितां सूचयन्नाह चतुर्भिः । शोभनः प्रसादोऽस्येति सुप्रसादः । प्रलयाम्भः परिक्लिष्ट मार्कण्डेयमन्तः प्रवेश्य तत्क्लेशमपनीतवानित्यर्थः । प्रसन्नात्मा पूर्णकामत्वाद्रागाद्यनाविलचित्तः । श्वासेनान्तराकृष्टस्य मार्कण्डेयस्य विस्मयाय विश्वानि ब्रह्माण्डानि

**असंख्येयोऽप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।**
**सिद्धार्थः सिद्धसंकल्पः सिद्धिदः सिद्धिसाधनः ॥४०॥**

धर्जंति सृष्ट्वा धत्ते इति विश्वधृक् । तानि विश्वानि व्याप्नुवन् भुनक्ति पालयतीति विश्वभुग्विभुः । इहोदाहरणं तत्प्रकरणं मृग्यम् । अथ वदरीपतित्वं द्योतयत्येकादशभिः । देवान् पितृंश्च स्वात्मकान् तथा विप्रांश्च सत् कुर्व्वन् सत्कर्त्ता । तैः स्वयमर्च्चितत्वात् सत्कृतः । साध्नोति भरतखण्डस्थानां हितानि तपसोऽन्ते साधुः । जहाति स्वोक्तप्रतिकूलानि जह्नुः । जाहातेर्द्वेऽन्तलोपश्चेति सूत्रान्नु प्रत्यये साधुः । इन्द्रप्रेषितान् कामवसन्तादीन् स्वतेजसा जयन् युध्यमानं रुद्रं चाभिभवन् जह्नुरिति श्रीभागवतनारायणीयादि प्रस्तावादपरे व्याचक्षते । शब्दसिद्धिस्तु पृषोदरादित्यादित्याहुः "नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः । तस्य तान्ययनं पूर्व्वं तेन नारायणः स्मृत" इति च स्मरणात् । नारा जीवगणास्तेषामयनं प्रवृत्तिर्यस्मात् स तथेत्यन्तर्य्यामिब्राह्मणादित्येके । अवतारिणा सहाभेदादिदं वोध्यम् । न रीयते न क्षीयते इति नरः । अन्येष्वपि दृश्यते इति डः । परिखेतिवच्छब्दसिद्धिः । निर्व्विकारनराख्य तद्द्वितीयरूप इत्यर्थः ॥३९॥

तपस्वि–विप्रवेशोप्यसंख्येयो गुणतो संख्यातुमसंख्यः । अनवच्छेद्य धृतिकत्वादप्रमेयात्मा । विशिष्टो परिमितविभूतिमान् । अज्ञात-तद्गुणगणैरिन्द्रभृत्यैः कामादिभिरखण्डितधैर्य्यो दिव्यरूपवतीरङ्गनाः प्रदर्श्य यस्तान् विस्मापयामास तेभ्यो ददौ चोर्व्वशीमित्यर्थः । शिष्टान् वेद–तदर्थानुष्ठाननिष्ठान् जनान् करोतीति शिष्टकृत् । ध्यातः श्रुतः सन् पुनातीति शुचिः, शोचति लोकमङ्गलमिति वा । अथ मन्वन्तरावतारतां द्योतयन्नाह नवभिः । सिद्धा अर्थाः संकल्पाश्च यस्य स सिद्धार्थः । सिद्धसंकल्पश्च अतः सिद्धिदः । देवमानवादि-वाञ्छि-



**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।**
**वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥४१॥**
**सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।**
**नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥४२॥**

तार्थकः । सिद्धिं निर्व्विघ्नां क्रियासमाप्तिं साधयतीति सिद्धिसाधनः । अनुष्ठानकालेऽपि साहाय्यकृदित्यर्थः ॥४०॥

वृषणमिन्द्रं चोपकृत्याह्नोति व्याप्नोतीति वृषाही । वासवो वृत्तहा वृषेत्यमरः । वृषेण जगद्रक्षणेन धर्म्मेण भातीति वृषभः । विशति सर्व्वेषु कार्य्यभारेष्विति विष्णुः । "व्याप्य सर्व्वानिमांल्लोकान्स्थितः सर्व्वत्र केशवः ! ततश्च विष्णुनामासि विशेर्धातोः प्रदशनादि"ति शिवोक्तेः । वृषण इन्द्रस्य पर्व्व उत्सवो यस्मात् स वृषपर्व्वा । वृषा इन्द्र उदरो यस्य स वृषोदरः । गर्भस्थवदिन्द्रो यस्य पालनीय इत्यर्थः । मन्वन्तरकथाष्टमोक्तोदाहृतिर्मृग्या । हयग्रीवरूपतां द्योतयन्नाह चतुर्विंशत्या । वर्द्धयति प्रजापतीमिति वर्द्धनः । भक्तदत्तं स्वल्पमपि भूरि करोतीति तथेत्यन्ये । लोकात्मकविग्रहप्रकाशाद्वर्द्धमानः । सर्व्वगतोऽपि सर्व्वास्पर्शाद्विविक्तः । श्रुतिसरितामाधारच्छ्रुतिसागरः ॥४१॥

शोभनाः श्रुतिसंरक्षणक्षमा भुजा यस्य स सुभुजः । वालकनिर्म्मितैः सैकतसेतुभिर्महासरिद्वेग इव मधुकैटभादिभिर्दुर्धरः । श्लाघ्यवाक्त्वाद्वाग्मी । अनवधिकातिशयपारमैश्वर्य्यवत्वान्महेन्द्रः । वसूनि द्यति दुष्टानामिति वसुदः । वस्ते निजमाहात्म्यमज्ञेष्विति वसुः । वहुरूपशालित्वान्नैकरूपः । बृहत्प्रांशुरूपं यस्य स बृहद्रूपः । शिपिषु रश्मिषु प्रविष्टत्वात् शिपिविष्टः । "शैत्याच्छ्यनयोगाच्च शिपिवारि प्रचक्ष्यते । तत्पानाद्रक्षणाच्चैव शिपिविष्ट इहोच्यत"

**ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।**
**ऋद्धः स्पष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥४३॥**
**अमृतांशूद्भवो भानुः शशविन्दुः सुरेश्वरः ।**
**औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥४४॥**
**भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।**
**कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥४५॥**

इति स्मृतेः । प्रकाशयति मधुकैटभनीतान्वेदानानीय ब्रह्मणीति प्रकाशनः ॥४२॥

पुनस्तयोर्मधुकैटभयोरागतौ स्वापादुत्थायोजस्तेजोद्युतिधरः । ओजः प्राणबलं तेजस्तदभिभवसामर्थ्यं द्युतिर्दुःसहा विग्रहकान्तिः । प्रकाशात्मा चिद्घनः । तयोः सन्तापकत्वात् प्रतापनः । सर्व्वसंपन्निषेवितत्वादृद्धः । वेदार्थप्राकट्यात् स्पष्टाक्षरः । स्वरहस्यस्य गुप्ततयोपदेशान्मन्त्रः । चन्द्रवदुज्ज्वलत्वाच्चन्द्रांशुः । श्वेतं चन्द्रविशुद्धाभमिति स्मृतेः । मधुकैटभपरिभाविप्रभावत्वाद्भास्करद्युतिः ॥४३॥

अमृतांशोश्चन्द्रस्योद्भवो यस्मात् सोऽमृतांशूद्भवः । "चन्द्रमा मनसो जात" इति श्रुतेः । समुद्रमथनेन तस्याविर्भावाद्वेति केचित् । मधुकैटभमारकेन तेजसा भ्राजमानत्वाद्भानुः । नारायणीयमन्त्रोदाहरणम् । अथ दत्तात्रेयतां व्यञ्जयन्नाह नवभिः । शशन्ति कुटिलं गच्छन्तीति शशाः, शशप्लुतगतौ पचाद्यच् , कपिलादयो निरीश्वरास्तान् वेत्ति निरस्यतयेति शशविन्दुः । विन्दुरिच्छुरिति सूत्राद्वत्ते रुप्रत्ययेनुमानिपात्यते । सुरन्ति वैदिकेश्वरस्वीकारेण दीप्यन्ते इति सुरा वशिष्टादयस्तानाश्नुते व्याप्नोतीति सुरेश्वरः । सेश्वरमुनिमान्य इत्यर्थः । भगवद्धर्म्मपीयूषेण संसृतिविषापहरणादौषधम् । धर्म्मसंकरविरोधित्वाज्जगतः सेतुः । सत्यैः पारमार्थिकैर्धर्म्मैः परान्निद्धर्म्म-



**युगादिकृद्युगावर्तो नैकमायो महाशनः ।**
**अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥४६॥**

कात्मवादिकुवुद्धीनाक्रमतेऽभिभवतीति सत्यधर्म्मपराक्रमः ॥४४॥

न चायमस्य महिमा कादाचित्कः किन्तु त्रैकालिक इत्याह भूतेति- त्रिष्वपि कालेषु जनैर्नाथनीय इत्यर्थः । पवते गच्छति कृपाकटाक्षेण जतानुद्धर्त्तुमिति पवनः । पुनानान् प्रयोजयति पावनः । स्वसंबन्धिभिर्मुनिभिर्लोकशुद्धिकृदित्यर्थः । एवं वहुभिरुपकारैर्नालति न पर्य्याप्नोतीत्यनलः । अलं भूषणपर्य्याप्तिवारणेषु । अथर्षभतां सूचयन्नाह षड्भिः । कामं जनाभिलाषं हतवान् वाञ्छितदानेनेति कामहा । चक्रवर्त्ती सन् कामं भोगाभिलाषं कृन्ततीति कामकृत् । परमहंसः सन् तादृग्वेशोऽपि कान्तः कमनीयः । काम्यतेऽर्हदादिभिः पाषण्डिभिरिति कामः । मुमुक्षूणां कामं भोगाभिलाषं प्रद्यतीति कामप्रदः । तत्तत्सर्व्वकर्म्मसु समर्थत्वात् प्रभुः । ऋषभचरित्रोदाहरणं मृग्यम् ॥४५

अथ युगावतारतां सूचयन्नाह चतुर्भिः । स्वाविर्भावेन युगानां सत्यादीनामादिमारम्भं करोतीति युगादिकृत् ।

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
तृतीयं नाम शतकं व्याख्यातम् ।

युगं सत्यादिकमावर्त्तयतीति पूर्व्ववृत्तमानयतीति युगावर्त्तः । नैकमायो वहुज्ञानः तत्तद्युगधर्म्मज्ञानवांस्तत्तत् प्रचारक इत्यर्थः । मायावयुनं ज्ञानमिति निघण्टकोषात् । महदशनं ज्ञानवैराग्यैश्वर्य्यानुभवलक्षणं यस्य स महाशनः । कृते शुक्लश्चतुर्वाहुरित्यादितत्प्रकरणमत्रोदाहरणम् । अथ कल्कितां व्यञ्जयन्नाह चतुर्भिः । अदृश्यो महाप्रभावपुञ्जत्वात्तदानीन्तनैर्म्लेच्छगणैर्द्रष्टुमशक्यः । व्यक्तरूपो महाकायोऽतिप्रगल्भः । सहस्रजिद्वहुम्लेच्छव्यूहक्षयकरः । अनन्तजिन्निखिलम्लेच्छक्षयकरः । तत्र प्रकरणमत्रोदाहरणम् ॥४६॥

**इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः ।**
**क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥४७॥**

एवं विलासव्यूहपुरुषलीलावतारतायां नामान्यभिधाय पुनः स्वयंरूपतायां नामान्यभिधत्ते इष्ट इत्यादिभिः । चरितान्यत्र क्रमिकप्रापयाण्यसकृदुपादीयन्ते ब्रह्मरुद्रादिसर्व्वदेवेच्छाविषयत्वादिष्टः । चक्रादिभिरायुधैः कौस्तुभादिभिर्विभूषणैश्च शोभिततया मधुपूर्य्यामाविर्भावाद्विशिष्टः । "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदायुदायुधम् । श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं पीताम्बरं सान्द्रपयोदसौभग" मित्यादि श्रीशुकोक्तेः । शिष्टैर्वैदिकैरिष्टोऽभ्यर्चितः । ततो ब्रजं गतः शिखण्डी शिखिपिञ्छशेखरः । वर्हिवर्हावतंसक इत्यष्टोत्तरशतनाम्नि । नह्यति वध्नाति ब्रजवासिनां मनांसि लावण्यरसनयेति नहुषः पृनहि कलिउषच् । वर्षति तेषु सुखानीति वृषः । नन्दब्रजजनानन्दीत्यष्टोत्तरशतनाम्नि । प्रतिवेशिनीभिर्निवेदितात् स्वबाल्यचापल्यनिर्भरादुदितं मातुः कोपं साधुमुद्रया हन्तीति क्रोधहा । "इत्थं स्त्रीभिः सभयनयनश्रीमुखालोकिनीभिर्व्याख्यातार्था प्रहसितमुखी नह्युपालब्धु मैच्छत्" इति श्रीशुकोक्तेः । उत्सिक्तं दुग्धं रक्षितुं मातरि गतायां क्रोधं करोतीति कोधकृत् । "सजातकोपः स्फुरितारुणाधरं संदश्य दद्भिर्दधिमन्थभाजनं । भित्त्वामृषाश्रुर्द्दृषदश्मना रहो जघास हैयङ्गवमन्तरं गत" इति श्रीशुकोक्तेः । लीलापोषकृदेष कोपः । सुखचिद्घनात् स्वरूपात् कुन्तलादिवद्वैलक्षण्येन विभातोऽपि ततोऽनतिरेको मन्तव्यो न तु रजोजन्यो मायातीते तस्मिंस्तस्यासम्भवात् । कंसप्रेषितानां दुष्टानां प्राणापहारकरणात् कर्त्ता । पूतनाजीवितहर इत्यादीन्यष्टोत्तरशतनाम्नि । विश्वरक्षार्थौ वाहू यस्य स विश्ववाहुः । महीधरो गिरिः सोऽस्य ब्रजरक्षादीक्षितस्यास्ति धार्य्य-



**अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।**
**अपां निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥४८॥**
**स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।**
**वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥४९॥**

तयेति महीधरः । अश आद्यच् । गोवर्द्धनाचलोद्धर्त्तेत्यष्टोत्तरशतनाम्नि ॥४७॥

न चोतते ब्रजपालनादित्यच्युतः । तत्र ख्यातत्वात् प्रथितः । प्राणिति प्रेम्ना ब्रजजनानिति प्राणः । प्राणान् बलानि ददातीति प्राणदः । "प्राणोस्मि प्रज्ञात्मानं मामायुरमृतमुपास्येति" श्रुतेः । सागसमागतं वासवमनु तत् सावधानाय सुमुखः सन् जायते प्रादुर्भवतीति वासवानुजः । अनौ कर्म्मणि ड इति सूत्रात् । गवामिन्द्रतयाभिषिक्ते तदापां कान्तीनामाश्रयोऽभूदित्यपांनिधिः । "अहं किलेन्द्रो देवानां त्वं गवामिन्द्रतां गत" इति शक्रोक्तेः "पायान्न इन्द्रो गवामि"ति श्रीशुकोक्तेश्च । मथुरादि धामरूपत्वादधिष्ठानम् । "साक्षाद्ब्रह्मगोपालपुरो हीति" श्रुतेः । "पञ्चयोजनमेवास्ति वनं मे देहरूपकमित्यादि" स्मृतेश्च । ब्रजप्रजापालने सावधानत्वादप्रमत्तः । "तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् । गोपाये स्वात्मायोगेन सोऽयं मे ब्रत आहित" इति । तद्वाक्याद्ब्रजराजकुमारत्वेन सर्व्वमान्यत्वात् प्रतिष्ठितः ॥४८॥

स्कन्धति शोषयति कंसपक्षीयानिति स्कन्दः । स्कन्दस्य देवसेनापतेर्धारणात् स्वशक्त्या पोषणात् स्कन्दधरः । धुरो जगद्भारस्य वहनाद्धुर्य्यः धुरोयट्काविति सूत्राद्यत् । मालाकारादिभ्यो वाञ्छितदानाद्वरदः । वायुं जगत्प्राणं वाहयति वहने शक्तं करोतीति वायुवाहनः, वायुवेगं वाहनं रथोऽस्येत्येके । वसुदेवस्यापत्यं वासुदेवः ।

**अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।**
**अनुकूलः शतावर्त्तः पद्मी पद्मनिभेक्षणः ॥५०॥**
**पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।**
**महर्द्धिरृद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥५१॥**

तस्यापत्यमित्यन् । वृहन्तो भानवो दीप्तयोऽस्येति वृहद्भानुः । आदिः कारणभूतो देव आदिदेवः । अहमादिर्हि देवानामिति स्मृतेः । रिपुपुराणां विदारणात् पुरन्दरः, वाचंयमपुरन्दरौ चेति सूत्रान्निपातोऽयम् ॥४९॥

भूशोकविनाशकत्वादशोकः । चौरादिभयतारकत्वात्तारणः । गर्भजन्मजरादिभयतारकत्वात्तारः । विक्रमित्वाच्छूरः । शूरवीरविक्रान्तौ चौरादिकौ । शूरस्य गोत्रापत्यं शौरिः । बाह्वादित्वादिञ् । जनान् माथुरानाश्वश्नुते जनेश्वरः स्वतेजसा तच्चित्तव्यापोत्यर्थः । तेषामानुकूल्ये स्थितत्वादनुकूलः । शतमावर्त्ताः पारमैश्वर्य्यविजृम्भणलक्षणा वार्षिकसारदम्भःसभ्रमसमा यस्य स शतावर्त्तः । स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः । आवर्त्ताः कंसादिभ्रामका नारदादयो यस्य शतमित्यन्ये । नित्यं लीलाकमलधारित्वात् पद्मी । वहुपद्मधनवान् वेत्यन्ये । पद्मनिभे गोकुले ईक्षणं यस्य पद्मेक्षणः । "सहस्रपत्रं कमलं गोकुलाख्यं महत्पदम् । तत्कर्णिकारं तद्धाम तदनन्तांशसंभवमिति" स्मृतेः ॥५०॥

पद्माकारा नाभिरस्येति पद्मनाभः । विकचाम्बुजनेत्रत्वादरविन्दाक्षः । पद्मेन दहराख्येन स्वभक्तहृत्कमलेन गीर्य्यतेऽन्तःस्थाप्यत इति पद्मगर्भः । अर्त्तिगभ्यांभन् । हृत्पद्मस्थं स्वध्यायतां भक्तानां शरीराणि विभर्त्ति पुष्णातीति शरीरभृत् । "दर्शनध्यानसंस्पर्शैर्मत्स्यकूर्म्मविहङ्गमाः । स्वान्यपत्यानि पुष्णन्ति तथाहमपि पद्म-



**अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।**
**सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिञ्जयः ॥५२॥**
**विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।**
**महीधरो महाभागो वेगवानमिताशनः ॥५३॥**

जेति" स्मृतेः । महाविभूतित्वान्महर्द्धिः सार्व्वज्ञादिगुणवृन्दसम्पन्नत्वादृद्धः । बृद्धो विश्वव्यापी विलासव्यूहादिपूर्णो वा आत्मा विग्रहोऽस्येति बृद्धात्मा । महान्ति ज्ञानात्मकत्वाद्युत्कृष्टान्यक्षाणीन्द्रियाणि यस्य स महाक्षः । विशालनेत्रो वेत्यपरे । गरुडेनाङ्कितो ध्वजोऽस्येति गरुड़ध्वजः ॥५१॥

नैरूपम्यादतुलः "न तस्य प्रतिमा अस्तीति" श्रुतेः । शृणाति हिनस्ति दैत्यादीनिति शरभः । शृकृशलीत्यादि सूत्रादच् । अतोभीमः विभेत्यस्मादिति तद्व्युत्पत्तिः । स्वभक्तानां समयास्तत्तत्साधनपरिपाककालान् जानाति तान् ज्ञात्वा तत्फलान्यर्पयतीति समयज्ञः । देवान्तर्य्यामी सन् साक्षाच्च यज्ञेषु हवींषि हरति गृह्णातीति हविर्हरिः । सर्व्वधातुभ्य इन् । गुणोत्थान्यङ्कोत्थानि चेति श्रीविग्रहे परमात्मनि द्विविधानि लक्षणानि । तत्र रक्तत्वतुङ्गत्वादिगुणयोगो निर्गुणोत्थानि । यदुक्तं सामुद्रके–"पञ्चसूक्ष्मः पञ्चदीर्घः सप्तरक्तः षडुन्नतः । त्रिह्रस्व पृथुगम्भीरो द्वात्रिंशल्लक्षणो महानिति" करादौ रेखामयान्यङ्कोत्थानि तत्र करयो रथाङ्गाब्जादीनि चरणयोस्तु ध्वजवज्रान्यूनविंशतिरिति पुराणेषु प्रसिद्धम् । तैरेतैः सर्व्वैर्लक्षणैर्यल्लक्षणं महापुरुषोऽयमिति ज्ञानं तत्र साधुरिति सर्व्वलक्षणलक्षण्यः । लक्ष्मीर्दिव्यरसगन्धाद्या संपद्वा नित्यं विद्यतेऽस्येति लक्ष्मीवान् । समितिं संग्रामं जयतीति समितिञ्जयः । तृणावर्त्तादिवधे उक्त इत्यर्थः ॥५२॥

स्वाश्रितस्नेहाक्षरणाद्विक्षरः । स्वाश्रितद्रोहि–विषयकरोषावेशे-

**उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।**
**करणं कारणं कर्ता विकर्ता गहनो गुहः ॥५४॥**

नारूप्योदयाद्रोहितः । नित्यनूतनत्वात् स्वाश्रितैर्नित्यं मार्ग्यत इति मार्गः । मार्गान्वेषणे चौरादिकः । स्वलीलापोषकानां स्वभक्तभावानामुद्गमने स्वयमेवोपायत्वाद्धेतुः । हि गतौ तस्मात्तुः । यशोदया जनन्या दाम्नोदरे निवद्धत्वाद्दामोदरः । "स च तेनैव नाम्नात्र कृष्णो वै दाम-बन्धनात् । गोष्ठे दामोदर इति गोपीभिः परिगीयते" इति स्मरणात् । तत्कृतानि तर्ज्जनादीनि तत्प्रेमयन्त्रितः सन् सहतीति सहः । जन्मर्क्षादि-नित्योत्सववत्त्वान्मही । "मह उद्धव उत्सव" इत्यमरः । वालक्रीड़नकादेर्धारणाद्धरः । महान् सर्व्वोत्कृष्टो भागो भजनमस्य महाभागः । गोपकुमारैः सह क्रीड़न्नतिजवत्वाद्वेगवान् । गोवर्द्धनोत्सवे गोपैर्निवेदितानि पूपपायसादीनि अमितान्यशनानि भोजनान्यस्येति महाशनः ॥५३॥

उद्गतो भवः कुवेरसुतयोः तरुजन्मलक्षणो यस्मात् स उद्भवः । क्षोभयति स्वगुणश्रवणेन जनानां मनांसीति क्षोभणः । सर्गकाले प्रकृतिक्षोभकत्वात्तथेत्यन्ये । दीव्यति क्रीड़ति सिंहादीन्निवध्य तैः सहेति देवः । विश्वसंपत्तिलक्षणश्रीर्गर्भे यस्य स श्रीगर्भः । जृम्भणे मृद्भक्षणे च जनन्या तद्गर्भे तस्या दर्शनात् । परा चासौ मा च गोकुलमहालक्ष्मीस्तस्या ईश्वरः स्वामीति परमेश्वरः । स्वभक्तानां स्वप्राप्तिकारीषु क्रियासु प्रकृष्टोपकारित्वात् करणम् । त्रिशक्तिकतेन प्रपञ्चनिमित्तोपादानत्वात् कारणम् । प्रधानादि-तत्त्व-सर्गकरत्वात् कर्त्ता । विरिञ्चान्तस्थो लोकरचनात्मकं विसर्गं करोतीति विकर्त्ता । गाहते वाधते सूक्ष्मधियामपि धीवृत्तोरिति गहनः गाहू विलोड़ेने इत्यस्माद्वहुलमन्यत्रापीतिषु च । कृच्छ्रगहनयोः कष इति निर्द्देशसामर्थ्याद्धस्वः । ईदृशं महिमानं गूहति ब्रजजनेष्विति गुहः । ईगुप-



**व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।**
**परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥५५॥**
**रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।**
**वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥५६॥**

धत्वात्कः । यद्यप्येते जानन्त्येव तथापि माधुर्य्य-प्रवाहेन तमन्तर्द्धापयति केलिरसलिप्सुः सन्निति वोध्यम् ॥५४॥

व्यवसीयते निश्चीयते परतत्त्वभावेनेति व्यवसायः । "कृष्णस्तु भगवान् स्वयमिति" स्मरणात् । विशेषेणावतिष्ठन्ते तत्त्वान्यत्रेति व्यवस्थानः । सन्तिष्ठन्ते प्रलीयन्ते तत्त्वान्यत्रेति संस्थानः । अधिकरणे ण्युच् । स्थानं स्वोपासकाय युधिष्ठिराय ददातीति स्थानदः । "युधिष्ठिरप्रतिष्ठाते"त्यष्टोत्तरशतनाम्नि" । ध्रुवत्यनुगच्छत्येकान्तिभक्तानिति ध्रुवः । "निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुब्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभि" रिति स्मरणात् । परात्मिका ऋद्धयोऽस्येति परर्द्धिः । परर्द्धितया वेदान्तैरुद्गीयमानत्वात् परमस्पष्टः । आनन्दमयत्वात्तुष्टः । स्वरूपानुवन्धिभिर्गन्धादिभोगैरुपेतत्वात्पुष्टः । शुभं कल्याणकरमीक्षणं कृपाकटाक्षोऽस्येति शुभेक्षणः ॥५५॥

रमन्ते योगिनोऽत्रेति रामः । हलश्चेत्यधिकरणे घञ् । सर्व्वावधित्वाद्विरामः । भावे घञ् । विरजो निष्पांशुलो निर्द्दोषो मार्गः साधनपद्धतिरस्येति विरजो मार्गः । अहिंस्रेण जपादिनाप्राप्य इत्यर्थः । सुहृन्नियोगाधेयत्वान्नेयः । अचो यत् । "यजस्वाभीस्पितं यज्ञं मयि श्रेयस्यवस्थिते । नियूङ्क्ष चापि मां कृत्ये सर्व्वं कर्त्तास्मि ते वच" इत्यादि स्मरणात् । यतो यज्ञे पादधावनेप्यधिकारः । "कृष्णः पादावने जने" इति स्मरणात् । नीयते सुहृद्भिः स्वनि-

**वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।**
**हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥५७॥**

योगे इति नयः । एरच् । "पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयमिति" स्मरणात् ।

इति वैशम्पायननोक्ते विष्णुसहस्रनाम्नि
चतुर्थं नामशतकं व्याख्यातम् ।

नास्त्ययः शुभावहो विधिरन्यो यदपेक्षयेत्यनयः । विशिष्टमीरणं यस्य सः इङ्गितेनैव चैद्यस्य शिरश्छेत्तेत्यर्थः । शिशुपालशिरच्छेत्तेत्वष्टोत्तरशतनाम्नि । यतः शक्तिमतामिन्द्रादीनां श्रेष्ठः । लोकधारकत्वाद्धर्म्मः । पुञ्मन् । "ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्म्मं सनातनमिति" स्मृतेः । मन्वादिधर्म्मविद्यां तदाचारे उपजीव्यत्वाद्धर्म्मविदुत्तमः ॥५६॥

विकुण्ठायां शुभ्रपत्न्यां जातत्वाद्वैकुण्ठः । शिवाद्यण् "पत्नी विकुण्ठा शुभ्रस्य तस्यां जातः पुरः पुमानिति" स्मरणात् भूम्यादितत्त्वसंश्लेषकत्वाद्वैकुण्ठः इति नारायणीयप्रस्तावात् । सर्व्वाग्रणीत्वात् पुरुषः पुरः वसन् पुर अग्रगमने धातुः । स्वभक्तप्राणतुल्यत्वात् प्राणः । "मनोमयः प्राणशरीरो भारूप" इति श्रुतेः । प्राणानिन्द्रियाणि दायति स्वभक्तानामिति प्राणदः । दैप् शोधने धातुः । नित्यनूतनत्वात् प्रणवः प्रणम्यत्वाद्वा, "प्रणमन्तीह यं वेदास्तस्मात् प्रणव उच्यते" इति स्मरणात् । नूतनत्वां प्रथयति स्वात्मयाथात्म्यं पार्थे इति पृथुः । प्रथ प्रख्याने प्रथेः कुः संप्रसारणञ्च । हिरण्येन ज्ञानेन गीर्य्यते क्रियते इति हिरण्यगर्भः । "ज्ञानं ज्ञेयः ज्ञानगम्यमिति" स्मृतेः । शत्रून् कामादीन् भक्तानां हन्तीति शत्रुघ्नः । अमनुष्यकर्त्तृके चेति हन्तेष्टक् । स्नेहा-विशेषण-भक्तेषु स्थितत्वात् व्याप्तः । वाति सूचयति मागधामेवमेतं जहीति वायुः । वातेरुण् ।



**ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।**
**उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥५८॥**

वागति गन्धनयोरित्यत्र गन्धनं सूचनं हिंसा चेत्यर्थः । अक्षस्य शकटस्याधः पुनर्जात इत्यधोक्षजः । "अक्षस्तु पाशके चक्रे शकटे च विभीषके" इति श्रीधरः । "अधोऽनेन शयानेन शकटान्तरचारिणा । राक्षसी निहता रौद्रा शकुनीवेशधारिणी ॥ पूतना नाम घोरा सा महाकाया महाबला । विषदिग्धं स्तनं क्षुद्रा प्रयच्छन्ती जनार्द्दने" "ददृशुर्निहतां तत्र राक्षसीं वनगोचराः । पुनर्जातोऽयमित्याहुरुक्तस्तस्मादधोक्षज" इति स्मृतेः । अधः कृतमक्षजमिन्द्रियं सुखं येन स तथेत्यन्ये । अक्षं स्यादिन्द्रिये क्लीवमिति श्रीधरः ॥५७॥

ऋच्छति गच्छति विचित्रैर्गुणैः स्वभक्तमनांसीति ऋतुः अर्त्तेश्चतुरिति सूत्रात्तुः । गुणानभिज्ञानामप्याकृतिमात्रेण मनोज्ञत्वात् सुदर्शनः । "यद्धर्म्मसूनोर्वत राजसूये निरीक्षदृक् स्वस्त्ययनं त्रिलोकः । कार्त्स्न्येन चाद्येह गतं विधातुरर्वाक् सृतौ कौशलमित्यमन्यत" इति स्मरणात् । कालयति विक्षिपतीति कालः । कलवलविक्षेपे चौरादिकौ रुद्रदेहजौ भूतौ विचक्र हंस-डिम्वकौ श्रुत्येदं हरिवंशाद्बोध्यम् । भूभारमपनीय परमे पदे तिष्ठतीति परमेष्ठी । परमे किदिति सूत्रेण परमे उपपदे तिष्ठतेरिन् सच कित् । अम्बावेति सूत्रेण षत्वम् । परित्यज्य देवतान्तराणि गृह्यते परदेवतात्वेनायमिति परिग्रहः । यद्वा होरिकोत्सवे क्रीड़ न्तमनुस्मृत्याह परितो ग्रहः कान्ताभिर्ग्रहणं यस्य स परिग्रहः । परितो ग्राहिकास्ता उच्यते समवैतीति उग्रः । उच समवाये धातुः । तस्मादृगेन्द्रेत्वादि सूत्राद्रन् चस्यगः । तासु सम्यग्वसतीति सम्बत्सरः । ताभिः समवेता-दक्षते लावण्यातिशयेन बर्द्धत इति दक्षः । दक्षबृद्धौ शीघ्रार्थे च धातुः । पचाद्यच् । श्रम एव प्रज्ञाद्यनिश्रामः स विगतो येन स

**विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।**
**अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥५९॥**
**अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः ।**
**नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥६०॥**

विश्रामः। विहारजनितस्य तासां श्रमस्यापनेतेत्यर्थः। विश्वं स्वपर्यन्तं सर्व्वं दक्षिणादेयमस्येति विश्वदक्षिणः। द्रुद्रक्षिभ्यामिन्च। "ददात्यात्मानमप्यज" इति स्मृतेश्च ॥५८॥

स्नेहपद्धतेर्विस्तारणाद्विस्तारः । प्रथमे वावशब्द इति सूत्रेण विपूर्व्वात् स्तृतेर्घञ् क्रियायाः । कर्त्तृ तादात्म्यं तदावेशादुपचर्य्यते। भूभारमपनीय शमे स्थास्यतीति स्थावरः। कलेरन्ते शास्त्रमर्य्यादां पुनः स्थापयिष्यतीति स्थाणुः। स्थोणुरिति णुः "स्थापयित्वा स्वमर्य्यादां स्वयम्भूविहितां हितामि"ति स्मरणात्। सत्यभाषित्वात् प्रमाणम्। "प्रमाणं नित्यमर्य्यादा–सत्यवादिप्रमातृष्विति"विश्वः। अव्ययं बीजमिति विशिष्टं नाम, विशेषेण जायतेऽनेनेतिबीजं उपसर्गे च संज्ञायामिति डः। अन्येषामपीति वे दीर्घत्वम । यद्वा व्रजति कार्याणि प्रविशतीति बीजम्। पृषोदरादिः निष्कामैर्भक्तै रेकान्तमर्थ्यत इत्यर्थः। अर्त्तेस्थन्। सकामैरेकान्तं नार्थ्यत इत्यनर्थः। "चतुर्विधा मम जना भक्ता एव हि ते स्मृताः । एषामेकान्तिनः श्रेष्ठास्ते वै वानन्यदेवताः। अहमेव गतिस्तेषां निराशीः सर्व्वकर्म्मणाम्। ये तु शिष्टास्त्रयो भक्ताः फलकामा हि ते मता" इति स्मरणात् । महान्तः कोशा भाण्डारागाराणि यस्य स महाकोशः । येष्वनन्ता नानाविधा सम्पदः समवयन्ति अतो महाभोगः । निखिलतत्संपदनुभवसंपन्नः। महान्ति धनानि यस्मात् म महाधनः। "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने" इति स्मरणात् ॥५९॥



**यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः ।**
**सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥६१॥**

स्वपराङ्मुखानामपि जीवानामजस्रपालनेन लसत्वादनिर्विण्णः। अथ शिशुःमाररूपतां सूचयन्नाह नवभिः । शिशुमारवपुषातिस्थूलत्वात् स्थविष्ठः "तारामयं भगवतः शिशुमाराकृतिः प्रभोरिति" स्मरणात् । ध्रुवानुवन्धेन सर्व्वाधारो भवतीति भूः । भूवः संज्ञान्तरयोरिति क्विप्। "पुच्छदेशे ध्रुवः स्थित" इति स्मरणात्। नक्षत्रतारादिसहितं चन्द्रसूर्य्यादि-ज्योतिश्चक्रं वायुना शिशुमारे निवद्धं तत् पुच्छे स्थितो भ्रमयतीति तत्सर्व्वाधारत्वं ध्रुवस्येत्यर्थः । धर्म्मं शिरोवयवतया यौति मिश्रयतीति धर्म्मयूपः। यौतेः पः स च किद्दीर्घश्च। धर्म्मो मूर्द्धानमाश्रित" इति स्मृतेः। महान्तो मखा यस्मै स महामखः। तदुद्देशेन ते प्रवर्त्तन्त इत्यर्थः । शिशुमारे निवद्धानि नक्षत्राणि तदन्तर्यामी सन्नयति भ्रमयतीति नक्षत्रनेमिः । नियोमिः "अलातचक्रवद्यान्ति वातचक्रेरितानि तु । यस्माज्ज्योतींषि वहति प्रवहस्तेन संस्मृत" इति स्मृतेः। नक्षत्राणि सन्त्यस्य नियम्यतयेति नक्षत्री प्रशस्त नक्षत्री प्रशस्त-नक्षत्राभिव्यक्तत्वात्तथेत्येके । नक्षत्राणां नियमने वहने च शक्तत्वात् क्षमः । अवान्तरक्षयैर्नक्षत्रान्तरैः सह क्षीणस्तिष्ठतीति क्षामः । क्षै क्षये धातुस्तस्मान्निष्ठा तकारस्य मकारः । तारका–शिशुमारस्य नास्तमेति चतुष्टयमिति । "यावन्मात्र प्रदेशे तु मैत्रेयावस्थितो ध्रुवः । क्षयमायाति तावत्तु भूमेराभूतसंप्लव" इति च स्मृतेः। सम्यक् ईहनं वाञ्छितं यस्मिन् पुण्यवतां समीहन् ॥६०॥

रुचिपत्न्यामाकूत्यां यज्ञनाम्नाविर्भूतत्वाद् यज्ञः। "जातो रुचेरजनयत् सुयमान् स यज्ञ आकृतिसूनुरमरानथ दक्षिणायामिति" श्रीशुकोक्तेः। यष्टुमर्हं इज्यः। कर्म्मणि यजेः क्यवार्षः। महती षोड़-

**सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।**
**मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥६२॥**

शोपचारलक्षणा इज्यास्येति महेज्ये: । व्रजयज्योर्भावे क्यप् । वेदोक्तैः कर्म्मभिराराध्यः क्रियते इति क्रतुः कृञः क्रतुः । सतः साधून् त्रायत इति सत्रम् । भक्तगृहरूपत्वाद्भक्तधनरूपत्वाच्च सत्रम् । सत्रं गृहं धनं सत्रमित्यनेकार्थकोषादित्येके । सतां प्राप्यत्वात् सतां गतिः । सर्व्वान् स्वभक्तान् युगपद्द्रष्टुं शीलमस्येति सर्वदर्शी । "दर्शनध्यानसंस्पर्शै" रित्यादि स्मृतेः । विमुक्तः प्रपञ्चास्पृष्ट आत्मा यस्य स विमुक्तात्मा । सर्व्वात्मनात्मानं जानातीति सर्व्वज्ञः । उत्कृष्टतमं विभु यज्ज्ञानं तत्स्वरूप इति सविशेषणं नाम । "सत्यं ज्ञानमनन्तं ब्रह्मे ति" श्रुतेः ॥६१॥

सुष्ठु व्रत अतितृप्तोपि प्रीत्यार्पितं भुङ्क्ते प्रीत्यार्पितात्तु निवर्त्तेतेति तृप्तत्वादिति सुव्रतः । "व्रताद्भोजन-तन्निवृत्त्योरिति" स्मृतेः । आनन्दपूर्णत्वेन स्मितशोभित्वात् सुमुखः । चित्सुख-विग्रहत्वात् सूक्ष्मः । शोभनो ब्रह्मादिरञ्जको घोषो वेणुनादोऽस्येति सुघोषः । "शवनसस्तदुपधार्य्य सुरेशाः शक्रशर्व्वपरमेष्ठिपुरोगाः । कवय आनतकन्धरचित्ताः कश्मलं ययुरनिश्चिततत्त्वा" इत्यादि-स्मरणात् । वेणुवाद्यविशारद इत्यष्टोत्तरशतनाम्नि । सुखं ददाति वेणुनादेनेति सुखदः । निर्निमित्तहितकृत्त्वात् सुहृत् । भङ्गीत्रयरुचिरेण करेण भक्तचित्तहारित्वान्मनोहरः । त्रिभङ्गी मधुराकृतिरित्यष्टोत्तर शतनाम्नि । न जितः कालियविषयकः क्रोधो येन सोऽजितक्रोधः । क्रोधोऽपि तेऽनुग्रह एव सम्मत इति तत्पत्नीवाक्यात् । इत्थञ्चारोषणो ह्यसौ देव इति सङ्गतम् । वीरावगाधह्लदविक्षोभकौ वाहू यस्य स वीरवाहुः । वकासुरस्य गिरिसन्निभस्यापि वीरणतृणवत् शकलितत्वाद्विदारणः ॥६२॥



**स्थापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।**
**वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥६३॥**
**धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥६४॥**

स्वापयति स्वाग्रजं तद्भक्तियन्त्रितः सन्निति स्वापनः । "स्वयं विश्रामयत्यार्य्यं पादसंवाहनादिभिरि"ति श्रीशुकवाक्यात् । गोवर्द्धनोत्सवाय स्वातन्त्र्येण प्रवृत्तत्वात् स्ववशः । प्रतिगृहं युगपत् सत्त्वाद्व्यापी । एवं नैकात्मा । "एकत्वमजहदेव वहुरूपः एकोपि सन् वहुधा योऽवभातीति" श्रुतेः । भक्तभावानुविधायि-विचित्रचेष्टत्वान्नैककर्म्मकृत् । वत्सान्रायत्याह्वयतीति वत्सरः । वत्सान् लाति गृह्णातीति वत्सलः । वत्सान् स्वस्मिन्नुत्सुकान् कामयत इति वा वत्सलः । वत्सांशाभ्यां कामवले इति लच् । वत्सबाढ़चर इत्यष्टोत्तरशतनाम्नि । असंख्यप्रशस्त- वत्सवत्वाद्वत्सी । रत्नभूतो गर्भो रत्नगर्भः, यशोदाखनिमाणिक्यत्वेनोत्प्रेक्ष्यमाण इत्यर्थः । धनानां कामधेनुनां स्वामीति धनेश्वरः ॥६३॥

अथ द्वारावतीपतित्वं द्योतयन्नाह । धर्म्मान् वेदोक्तान् गोपायतीति धर्म्मगुप् । "धर्म्म-संस्थापनार्थाय सम्भवामि युगे युगे" इति स्मृतेः । लोकसंग्रहाय धर्म्मानुष्ठानाद्धर्म्मकृत् । "न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किं पुनः । नानवाप्तमवाप्तव्यं वर्त्त एव च कर्म्मणी" त्यादि स्मृतेः । हरिवंशे धर्म्माचरणं ख्यातम् । यतः स्वयंधर्म्मी ननु निर्द्धर्म्मकः । "यः कालकालो गुणी सर्व्वविद्य" इति श्रुतेः । त्रैकालिकसत्तायोगात् सत् । "सदेव सौम्येति" श्रवणात् । न सीदत्यवसादं यातीत्यसत् । क्षरति दुष्टरक्षणादिति क्षरम् । प्रणवरूपत्वादक्षरम् । "ओमित्यात्मानं ध्यायथेति" श्रुतेः । प्रपन्नदोषापरि-

**गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः ।**
**आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥६५॥**

ज्ञानादविज्ञाता तद्दोषेष्वतात्पर्य्यात्तदुपेक्षा ह्यत्राविज्ञानमुच्यचे । "अपि चेत् सुदुराचारो भजतो मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः" इति स्मृतेः । अविरुद्धज्ञातृत्वात्तथेत्यन्ये । सहस्राणि असंख्याता अंशवो ज्ञानान्यस्येति सहस्रांशुः । सर्व्वविषयकज्ञानवानित्यर्थः । प्रपन्नदोषविनिवृत्तिकरणात् विधाता । "स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः । विकर्म्म यच्चोत्पतितं कथञ्चिद्धुनोति सर्व्वं हृदि सन्निविष्ट" इति स्मृतेः । ननु सदाचारिभ्यो दुराचारिणां प्रपन्नानां को भेद को धर्म्मस्तत्राह । कृतेति-कृतं लक्षणं तद्भेदानुमापकं येन स कृतलक्षणः । तच्च भजते मामनन्यभागिति त्यक्तान्यभावस्येति च ॥६४॥

उक्तलक्षणानां प्रपन्नानां यमादिभ्यो धर्षणं वर्ज्जयतीत्याशयेनाह । गभस्तयः किरणमालास्तद्युक्ता नेमिरस्येति गभस्तिनेमिः । सुदर्शनस्तद्रूप इत्यर्थः । सुदर्शनभयात्तान् प्रधर्षयितुं तं तेनेच्छन्तीति भावः । ननु तदासङ्कास्ते तत्राह । सत्वस्थः तेषां चित्ते स्थित इत्यर्थः । सुपिस्थ इति कः । एवं भावमजानतो यमकिङ्करान् हिनस्तीति वर्णविपर्ययेण सिंहः । भूतेश्वराणां यमादीनामपीश्वर इति भूतमहेश्वरः । आदीयते प्रशास्तृत्वेन यमादिभिरित्यादिः । दीव्यति जिगीषति स्वभक्तजिघांसुंस्तानिति देवः । ततः कर्म्मधारयादिदेवः । एषूदाहरणम् । "वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते । तव गतिरथवा ममास्ति चक्रप्रतिहतवीर्य्य-बलस्य सोऽन्यलोक्य" इति । "प्रभवति संयमने ममापि विष्णुरिति" च यमवाक्यम् । महांश्चासौ देवश्च कन्दुकादिभिरिव स्वाधीनैस्तैः क्रीड़ापरश्चेति महादेवः । "बालः क्रीड़नकैर्यद्वत्क्रीड़तेऽस्माभिरच्युत" इति



**उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।**
**शरीरभूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥६६॥**
**सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।**
**विनयो जयः सत्यसंधो दाशार्हः सात्वतांपतिः ॥६७॥**

स्मृतेः । तेषां यथोचिते विनियोगे क्षमत्वाद्देवेशः । देवभृतोर्ब्रह्मरुद्रयोरपि स्वाधिकारविधिज्ञापनाद्देवभृद्गुरुः । कृग्रोरुच्चेति कुप्रत्ययः ॥६५॥

विचित्रानन्तशक्तिसम्पन्नत्वेन सर्व्वप्रवरत्वादुत्तरः । "उत्तरं प्रतिवाक्ये स्यादूर्द्धोदीच्योत्तमेन्यवदति विश्वः।" "विश्वस्मादिन्द्र उत्तर" इति श्रुतेः । गोः सूर्य्यस्यापि पतिरिति गोपतिः । गौर्नादित्ये वलीवर्द्दे इत्यादि नानार्थात् । सर्व्वरक्षकत्वाद्गोप्ता । ज्ञानेनैव नतु कर्म्मणा ज्ञान-कर्म्मभ्यां वासमुच्चिताभ्यां गम्य इति ज्ञानगम्यः । पुरानि क्षत्रज्ञवपुंष्यातनोतीति काल कलितत्वाभावात् पुरापि भवतीति वा पुरातनः ।

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
पञ्चमं नाम शतकं व्याख्यातम् ।

शरीरभूतं वृन्दारण्यं विभर्त्तीति शरीरभूतभृत् । "पञ्चयोजनमेवास्ति वनं मे देहरूपक" मिति वचनात् । भुङ्क्तेऽनुभवति नित्यं तदिति भोक्ता । ततः कर्म्मधारयदैकं नाम । कपीनां स्वक्रीड़ोपकरणानां स्वामीति कपीन्द्रः । जन्मर्क्षोत्सवादिषु विप्रेभ्यो वहुदानाद्भूरिदक्षिणः ॥६६॥

सोमं रुद्रं पातीति सोमपः । अमृतान् दैवतान् पातीत्यमृतपः । उमा कीर्त्तिः कान्तिर्वा तया सहितः सोमः । "उमातसीहैमवतीहरिद्राकीर्त्तिकान्तिष्विति" विश्वः । पुरून् महावलान् वहून् शत्रून्

**जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।**
**अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥६८॥**

जयन्तीति पुरुजितस्तेषु पुरुषु वहुषु रुद्रादिषु महावीर्य्येषु श्रेष्ठत्वात् पुरुजित् पुरुसत्तमः । एतच्च हरिवंशे त्रिपुरवधे स्वांशतेजसा रुद्रादेराप्यायनाम्भूमौ पतितस्य रुद्ररथस्योत्थापनाच्च गम्यम् । विशेषेण नीयते यदुभिः सेव्यतामयमिति विनयः । जीयते विधेयः क्रियते तैरिति जयः । एरच् । सत्या यथार्था सन्धा तेषां रक्षणे प्रतिज्ञाऽस्येति सत्यसन्धः । दानपात्रत्वाद्दाशार्हः । "अतः पात्रतरः कोऽन्यस्त्रिषु लोकेषु विद्यते । कृष्णात्कमलपत्राक्षाद्देवदेवाज्जनार्द्दनादिति" स्मरणात् । दाशार्हवंशोद्भूतत्वाद्वा । सात्वतां यदूनां पालकत्वात् सात्वतां पतिः । "पतिर्गतिश्चान्धकवृष्णिसात्वतामिति" श्रीशुकवाक्यात् । सद्ब्रह्मकृष्णाख्यं येषां स्वामित्वेनास्ति ते सत्वन्तः । तेषामिदं कर्म्मसात्वतं तत्करोत्याचष्टे वेति निच् । नाविष्टवद्भावाट्टिलोपः, ततः क्विपि निलोपे च सति सात्वदिति सिद्धः । ततः सात्वतां वैष्णवधर्म्मप्रचारकानां पतिरित्येके ॥६७॥

जीवयति स्वविश्लेष--विदूनान् भक्तान् स्वदर्शनामृतेनेति जीवः । विनयति पालयति तान् स्वात्मजवल्लालनेनेति विनयिता । "आनन्दमूर्त्तिर्भगवान् हरिस्त्रैलोक्यपूजितः । द्रष्टुं न सहते देवि किलैतान् स्वपरिचारकानिति" स्मरणात् । नयगतौ रक्षणे च धातुः । दृग्गोचरः सन्ननुगामीति वा विश्लेषार्त्ति तेषां साक्षात्पश्यतीति साक्षी । मुखे कुन्दवद्धासो यस्य तेषु प्रादुर्भूतस्येति मुकुन्दः । पृषोदरादिः । स्वात्मन्येव तेषां धारणादमितविक्रमः । उक्तं कैमुत्येनाह । पातालसमुद्राम्भसां विश्वाधारकर्म्मात्मना समाश्रयत्वादम्भोनिधिः । तदुपरि विश्वाधारस्तम्भस्य शेषस्यान्तर्यामी भवन्ननन्तात्मा । प्रलयशेषपर्य्यङ्के महोदधौ शेते स्वांशेनेति महोदधिशयः । अधिकरणे शेत-



**अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।**
**आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रम ॥६९॥**
**महर्षिः कपिलाचार्यः कृतज्ञो मेदनीपतिः ।**
**त्रिपदस्त्रिदशाध्यक्षो महाश्रृङ्गः कृतान्तकृत् ॥७०॥**

रित्यच् । तत्रापि रम्यत्वादन्तकः । "अन्तः प्रान्तेन्तिके नाशे स्वरूपेऽतिमनोहरे" इति विश्वः । महोदधिशयोऽन्तक इति सविशेषणमेकं नाम ॥६८॥

अथ कपिलतां दर्शयति द्वादशभिः । न जायते जीयते जीववद्धातुयोगेनेत्यजः । कार्द्दमं वीर्य्यमापन्न इत्यत्र तु कर्द्दमस्य भक्तिवलं प्राप्त इत्यर्थः । महं पूजामर्हति महार्हः । स्वैर्भक्तैरासमन्तात्परेशत्वेन भाव्यत्वात् स्वाभाव्यः । जितानि स्वभक्तामित्राणि कामादिरूपाणि येन स जितामित्रः । प्रमोदते स्वैकान्तिनं कर्द्दमं वीक्ष्य हर्षाश्रु कलिलो भवतीति प्रमोदनः । आनन्दति स्वैकान्तिनीं देवहूतिं मातरमुपदिश्येत्यानन्दः । नन्दयति तां पुत्रभावेनेति नन्दनः । नन्दति तत् पुत्रभावेनेति नन्दः । सत्याः स्वानुवन्धित्वेन वास्तवा धर्म्मा ज्ञानादयो यस्य स सत्यधर्म्मा । अग्नेयस्य कपिलस्य तु ते प्राकृता एव त्रिषु वेदेषु क्रमो गतिरस्येति त्रिविक्रमः । "त्रिरित्येवं तत्र वेदाः कीर्त्तिताः मुनिसत्तमैः । क्रमते तांस्तथा सर्व्वांस्त्रिविक्रम इति" शिवोक्तेः ॥६९॥

सर्व्ववेददर्शित्वान्महर्षिः । पिङ्गलवर्णत्वात् कपिलः । कवृवर्णेमिथिलादित्वादिलच् पान्तादेशः । शुद्धात्मोपदेशकत्वादाचार्य्यः । ततः कर्म्मधारयः । महर्षि कपिलाचार्य्य इति सविशेषणमेकं नाम । सगरपौत्रस्यांशुमतः स्वप्रणवत्वं कृतं जानातीति कृतज्ञः । इहोदाहरणं तु कपिलदेवचरितं मृग्यम् । अथ वराहतां दर्शयति पञ्च-

**महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।**
**गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥७१॥**
**वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।**
**वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥७२॥**

विंशत्या। मेदिन्या भूवो भर्त्तेति मेदिनीपतिः। प्रणवगतानि त्रीणि पदानि वाचकान्यस्येति त्रिपदः । देवानामाप्तसखत्वात् त्रिदशाध्यक्षः। भूमण्डलाधारदंष्ट्राग्रत्वान्महाश्रृङ्गः। नारायणीय इत्येकश्रृङ्गशब्देन एतदुक्तम्। अतिप्रभुत्ववत्वाद्वा। "श्रृङ्गं प्रभुत्वे शिखरे" इति विश्वः । कृतान्तं कालनिभं हिरण्याक्षं कृन्ततीति कृतान्तकृत् ॥७०॥

महाद्रितुल्यशूकरत्वान्महावराहः। रसातलगतां गां भूमिं विन्दतीति गोविन्दः । शोभनानाद्यविद्याविनाशनक्षमा स्वधाम–श्रीमथुरायात्म्यावेदिका वागेव देवव्यूहरूपा वा सेना यस्य स सुषेणः । कनकजटितानि रत्नमयान्यङ्गदादि अस्येति कनकाङ्गदी । उपलक्षणमेतन्मुकुटादेः। तादृग्विग्रहस्यात्मत्वेन ज्ञातुमशक्यत्वाद्गुह्यः। गुहेर्ण्यत् संज्ञापूर्व्वक-विधेरनित्यत्वान्नगुणः। गन्तुं प्रवेष्टुमशक्यत्वाद्गभीरः। गमेरीरन् भश्चान्तादेशः। तत्त्वं च गुणानन्त्यादेव वोध्यम् हिरण्याक्षेण गाढुं प्रतिहन्तुमशक्यत्वाद्गहनः। पदसिद्धिः पूर्व्ववत् स्वशक्तिभिरक्षितत्वाद्गुप्तः। चक्रगदयोः धारणाच्चक्रगदाधरः ॥७१॥

विदधाति करोति देवकार्य्यमिति वेधाः। स्वान् इङ्गयति वोधयति स्वधर्म्ममिति स्वाङ्गः। अगि गतौ धातुः। हिरण्याक्षेणापराभवादजितः। नीलोत्पलाभत्वात् कृष्णः। अतिबलत्वाद्दृढः। दृढ़स्थूल वलयोरिति सूत्रात्। हिरण्याक्षं सम्यक् कर्षतीति सङ्कर्षणः। ततो न च्यवते स्मेत्यच्युतः। सङ्कर्षणोऽच्युत इति सविशेषणमेकं



**भगवान् भगहानन्दी वनमाली हलायुधः ।**
**आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥७३॥**

नाम। वृणुते स्वलाभे भक्तानिति वरुणः। "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः । कृवृदारिभ्य उनन्। वरुणानां तं स्वामित्वेन वृणवनानां भक्तानामदूरभवत्वाद्वरुणः। वरुणादागतत्वाद्वेत्यन्ये । वृक्षते स्वीकरोति पत्नीत्वेन भूमिमिति वृक्षः। वृक्ष वरणे भवादिस्तस्मात् पचाद्यच् । वृश्चत्यविद्यामिति वेत्येके । पुष्करं समुद्राम्भोऽक्ष्णोतीति पुष्कराक्षः। "कवन्धमुदकं पाथः पुष्करं सर्व्वतोमुख" मित्यमरः। महन्मोक्षदातृमनोऽस्येति महामनाः। वराहचरितमत्रोदाहरणं मृग्यम् ॥७२॥

भगवच्छब्दवाच्यत्वाद्भगवान्। तथाहि वैष्णवे-"शुद्धे महाविभूत्याख्ये परब्रह्मणि शब्द्यते। मैत्रेय भगवच्छब्दः सर्व्वकारणकारणे। संभर्त्तेति तथा भर्त्ता भकारार्थो द्वयान्वितः। नेता गतयिता स्रष्टा गकारार्थस्तथा मुने। ऐश्वर्य्यस्य समग्रस्य वीर्य्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चापि षण्णां भग इतीङ्गना। स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः। ज्ञानशक्तिवलैश्वर्य्यवीर्य्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विनाहेयैर्गुणादिभि" रिति। भगमुत्पथगानां हतवानिति भगहा। नन्दो ब्रजनाथोस्त्यस्य नित्यं पितृत्वे नन्दो। नन्दगोपप्रियात्मज इत्यष्टोत्तरशतनाम्नि। सखिभिर्रपिता वनमाला नित्यमस्यास्तीति वनमाली। बलभद्ररूपत्वाद्धलायुधः। अदित्यां वामनरूपेणाविर्भावादादित्यः। दित्यदित्येत्यादिनाण्यः। ज्योतिषादित्यतुल्यत्वाज्ज्योतिरादित्यः। ईदृशोऽप्याश्रितापराधक्षमाश्रीलत्वात् सहिष्णुः। गत्या गमनेन सत्तमोऽतिशोभनः। गतिषु समाश्रयनीयेषु श्रेष्ठत्वाद्वा तथेत्येके ॥ ७३ ॥

**सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।**
**दिवःस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥७४॥**
**त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।**
**संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥७५॥**

परशुरामतां सूचयन्नाह चतुर्भिः । शोभनं वैष्णवं धनुरस्येति सुधन्वा । खण्डः सर्व्वक्षत्रच्छेत्ता परशुर्यस्य सः । क्षत्रियकुले निर्द्दयत्वाद्दारुणः । क्षत्रहत्या विनिवृत्ति–फले यज्ञे स्वनिर्जिताया भूमे ऋत्विग्भ्यः प्रदानाद्द्रविणप्रदः । अथ व्यासतां सूचयन्नाह दशभिः । दिवः परमव्योम्नो याथात्म्यविमर्शनाद्दिवः स्पृक् । अलूक् समासः । सर्व्वदृक् ज्ञानं यस्मात्तस्य वेदस्य चातुर्व्विध्येन व्यसनाद्विभागात् सर्व्वदृग्व्यासः । इतिहास—पुराण—रूपाश्चतुर्लक्षण्याश्च वाचः, प्रादुर्भावकत्वाद्वाचस्पतिः । सारस्वतावतारत्वे भगवद्वाक्सम्भूतत्वादयोनिजः । "अथ भूयो जगत्स्रष्टा भोशब्देनानुनादयन् । सरस्वतीमुच्चचार तत्र सारस्वतोऽभवदिति" स्मरणात् ॥ ७४ ॥

त्रीणि वेद-व्रत-समाख्यानि सामानि सन्त्यस्येति त्रिसामा । निखिलानि सामान्यतिप्रीत्या गायतीति सामगः । गापोष्टक् । सत्यविद्यां शिष्याणामिति साम । योऽन्तकर्म्मणि ततोमनन् । एवमविद्यां विनाश्य मुक्तेर्विधानान्निर्व्वाणम् । अविद्यारोगनिवर्त्तकत्वाद्भेषजं । तन्निदानदर्शकत्वाद्भिषक् । अथ कृष्णचैतन्यतां द्योतयन्नाह षड्भिः । सन्न्यासं परिव्रज्यं करोतीति सन्न्यासकृत् । शमयत्यालोचयति रहस्यं हरेरिति शमः । शम आलोचने चुरादिर्मत् । शाम्यत्युपरमति कृष्णान्यविषयादिति शान्तः । नितिष्ठन्त्यस्यां हरिकीर्त्तनप्रधाना भक्तियज्ञा इति निष्ठा । "कृष्णवर्णं त्विषाकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् । यज्ञैः संकीर्त्तनप्रायैर्यजन्ति हि सुमेधस" इति



**शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।**
**गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥७६॥**
**अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।**
**श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः ॥७७॥**

स्मरणात् । साम्यन्त्यनया भक्तिविरोधिनः केवलाद्वैतप्रमुखा इति शान्तः । महाभावान्तानां भावभेदानां परममयनमिति परायणम् ॥ ७५ ॥

पुनः स्वयंरूपतां सूचयन्नाह । शुभाङ्गानि मङ्गलात्मकानि स्वैकान्तिनां गोकुलवासिनां मनोहराण्यङ्गानि चरणादीन्यस्येति शुभाङ्गः । शान्तिमानिनीभ्यो मानोपशमं ददाति मन्दस्मितेन विनयवतेति शान्तिदः । सृजति प्रमोदसम्पदं तासामिति स्रष्टा । कौ वृन्दावनधरण्यां मोदत इति कुमुदः । इगुपधत्वात् कः । "वृन्दावनं गोवर्द्धनं यमुनापुलिनानि च । वीक्ष्यासीदुत्तमा प्रीति राममाधवयोर्नृपेति" श्रीशुकवाक्यात् । कौ पृथिव्यां वलते भवति सर्व्वमोहकनादमाधुर्येणेति कुवलः वेणुस्तस्मिन्शयः पाणिरस्येति कुवलेशयः । वेणुगीतमत्रोदाहरणं मृग्यम् । शयवशिवासिष्वकालादिति सूत्रात् सप्तम्या अलुक् । "पञ्चशाखः शयपाणिरि"त्यमरः । गोभ्यो हितत्वाद्गोहितः । गवां स्वामित्वाद् गोपतिः । तासां रक्षकत्वाद्गोप्ता । एतदेवाह ब्रजहिंसार्थमागते वृषभेबलीवर्द्धाकृतौ दानवेऽक्षिणी यस्य स वृषभाक्षः । ब्रजशत्रुं तं दृष्टवानित्यर्थः । यतो वृषप्रियः स्वकीया वृषाः प्रिया यस्य सः । स्ववृषरक्षायै यस्य वृषासुरो हन्तव्य इत्यर्थः ॥७६॥

वृषासुरसांमुख्यान्न निवर्त्तितुं शीलमस्येत्यनिवर्त्ती । सख्युरंशे भुजं निधाय तमवजानन् संहित इत्यर्थः । वृषासुरे सांमुखीने सति सख्युरपि निवृत्त आत्मा यस्य स निवृत्तात्मा । सर्व्वानिकतः कृत्वा

**श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।**
**श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥७८॥**

तेन सह योद्धुं प्रवृत्त इत्यर्थः । ततः शृङ्गग्राहं तस्य मारणात् संक्षेपः । वृषभासुरविध्वंसीत्यष्टोत्तरशतनाम्नि । एवं व्रजस्य कल्याण-विधानात् क्षेमकृत् । ततः प्रियाभिर्गोवधदोषेऽभ्युदीरिते गङ्गादि-तीर्थान्याकार्य्य तद्वाराभिर्विशुद्धोऽभूदिति शिवः । एषु दशमादि-कीर्त्तितानि वृषासुराहवचरितान्युदाहरणानि मृग्याणि । क्षेमकृच्छिव इति सविशेषणमेकं नाम । वृषासुरं निहत्य निःसपत्नः शेते इति शिवः ।

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
षष्ठं नाम शतकं व्याख्यातम् ।

दक्षिणावर्त्तातिसूक्ष्मपीतरोमकुण्डली–वपुषा श्रीवत्सेनाङ्कितं वक्षो यस्य सः श्रीवत्सवक्षाः । परेशस्यासाधारणं चिन्हमिदम् । विना श्रीवत्सकौस्तुभाविति स्मरणात् । श्रीषु गिरिराजकटकसानु-शोभासु वसति समासक्तः सन्निति श्रीवासः । श्रीणां तासां कुपिता-दिन्द्रात् पालनात् श्रीपतिः । श्रीमतां मतिमतां वाग्मिनां वा स्व-मित्राणां वरणीयत्वात् श्रीमताम्बरः ॥७७॥

श्रियं स्वमित्राणां वेषरचनां दयते पालयतीति श्रीदः । श्रीणां स्वभक्त-त्रिवर्ग-सम्पत्तीनामीशनान्नियमनात् श्रीशः । तत्सर्व्वाधिष्ठात्र्यां स्वांशैः स्वसर्व्वाविर्भावानुगामिण्यां श्रियि गोकुलमहालक्ष्म्यां नित्यं वसतीति श्रीनिवासः । श्रीः सा निधियतेऽस्मिन् रत्नमञ्जरीवेन्द्रनील-संपुट इति श्रीनिधिः । यच्छ्रयनादियं श्रीरिति निरुच्यते । श्रियं तां विभावयति सौरभ्यधारयेव स्वगुणसम्पदेति श्रीविभावनः । आत्म-भूतां तां श्रियं धरति वन्हिरिवोष्णागमिति श्रीधरः । श्रियि तस्यां करौ यस्य तां परिष्वजत इति श्रीकरः । श्रेयोभूता सा श्रीर्नित्य-



**स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।**
**विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥७९॥**

मस्यास्तीयि श्रेयः । श्रीमान् । श्रीनिवासादिषु षट्सूदाहृतिस्तु गोकु-लाख्ये माथुरमण्डले इत्यारभ्य "द्वे पार्श्वे चन्द्रावली राधिके"त्यु-क्त्वा "यस्यांशेन लक्ष्मीदुर्गादिका शक्तिरिति" पुरुषवोधनी–श्रुतिः । "राधया माधवो देवो माधवेनैव राधिका । विभ्राजन्ते जनेष्वेत्यृ" कृपरिशिष्टश्रुतिः । "सत्त्वं तत्त्वं परत्वञ्च तत्त्वत्रयमहं किल । त्रितत्त्व-रूपिणी सा च राधिका मम वल्लभा । प्रकृतेः पर एवाहं सापि मच्छ-क्तिरूपिणी"ति । "देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सर्व्व-लक्ष्मीमयी सर्व्वकान्तिः संमोहिनी परा" इति गौतमीयोक्तेश्च नित्य-श्रीकतया गोकुलादेर्लोकत्रयस्याश्रयत्वाल्लोकत्रयाश्रयः ॥७८॥

श्री–माधुर्य्य–लावण्य – मार्द्दव–सौरभ्यादि–सुधासिन्धुभोगात् शोभनान्यक्षाणीन्द्रियाणि यस्य स स्वक्षः । श्रीस्पृहणीयदिव्यावय-वत्वात् स्वङ्गः । एवं तां श्रियमानन्दयंस्तदाविर्भावानांशतानि नन्द-यतीति शतानन्दः । "चिन्तामणिप्रकरसद्मसु कल्पवृक्षलक्षावृतेषु सुरभीरभिपालयन्तम् । लक्ष्मीसहस्रशतसंभ्रम-सेव्यमानं गोविन्द-मादिपुरुषं तमहं भजामीति" ब्रह्मोक्तेः । एवं सर्व्वदा तत्र तत्र तया ताभिश्च नन्दतीति नन्दिः । सर्व्वधातुभ्य इन् । ज्योतिर्गणानां तत्तत्प-रिचर्य्योपकरण–च्छत्रचामरादि–वैशिष्टेन वपुषा च दिव्येन भ्राज-मानानां नित्यपार्षद–वृन्दानां स्वामित्वाज्ज्योतिर्गणेश्वरः । ईदृशोऽपि सौशिल्यार्णवत्वेन प्रमाणाधीनमनस्कत्वाद्विजितात्मा । शयनासन-गमनादिषु स्वभक्ताय तत्त्वाद्विधेयात्मा । एवम्विधयेन मनोज्ञ–यशस्क-त्वात् सत्कीर्त्तिः । सर्व्वविषयकस्वभक्तसन्देहनिवारकत्वाच्छिन्न-संशयः । "तदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यत" इत्यादि-स्मृतेः ॥७९॥

**उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।**
**भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥८०॥**
**अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।**
**अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥८१॥**

ईद्दशतया शास्त्रेषूदित्वरत्वादुदीर्णः । सर्व्वान् भक्तान् सानुरागः पश्यतीति सर्व्वतश्चक्षुः । "दर्शनध्यान-संस्पर्शैरि"त्यादि स्मरणात् । स्वभक्ताधीन-सर्व्ववृत्तित्वादनीशः । "अहं भक्तपराधीन" इत्यादि स्मरणात् । शाश्वते नित्ये स्वभक्तसमाजे स्थैर्य्यात् शाश्वतस्थिरः । वृन्दाटवी-पृथिव्यां शयनाद्भूशयः । "क्वचित्पल्लवतल्पेषु नियुद्धश्रम-कर्षितः । वृक्षमूलाश्रयः शेते गोपोत्सङ्गोपवर्हणः" इति श्रीशुक-वाक्यात् । वृन्दावनान्तःसञ्चारीत्यष्टोत्तरशतनाम्नि । रहोमिलितया कयाचिद्भामिन्या सहोत्तरीयास्तृतायां कुञ्जभुवि शयनाद्वा भूशयः । भूषयति तां च स्वपादचिह्नैः कुसुमभूषणैश्चेति भूषणः । भवतात् तस्यास्तस्याश्च वाञ्छितपूरक इति भूतिः । क्तिच्क्तौ चेति कर्त्तरि क्तिच । अथ मथुरामक्रूरेण नीयमानस्त्वरयैवायास्यामीति स्वप्रेय-सीनां शोकापहरणत्वादशोकः । स्वागमनवार्त्तया पित्रोः शोकं नाश-यन् शोकनाशनः ॥८०॥

कंसात् पित्रोरवज्ञया जाज्वल्यमानत्वात् अर्च्चिष्मान् । ज्वाला-भासोर्नपुंस्यर्च्चिरिति नानार्थवर्गः । मालाकारेण कुब्जया च सत्कृत-त्वादर्च्चितः । काम्यते तद्रूपगुणमोहितया कुब्जयेति कुम्भः । कमे कुम्भश्चेति कुमादेश प्रत्ययौ । कुब्जा-कृष्णाम्बरधर इत्यष्टोत्तर-शतनाम्नि । गुण-यौवन-पूर्णत्वात् कुम्भ इत्यन्ये । सखिगोष्ठ्यामेव त्वद्गेहमायास्यामीत्यच्छद्मधोत्वाद्विशुद्धात्मा । विशोधयति हस्ति-पकं हस्तिनञ्च निहत्य मोक्षं ददादिति विशोधनः । हस्तिना रङ्ग-



**कालनेमिनिहा वीरः शौरः शूरजनेश्वरः ।**
**त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥८२॥**
**कामदेवः कामपालः कामीकान्तः कृतागमः ।**
**अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥८३॥**

द्वारि निरुद्धोनाभूदित्यनिरुद्धः । प्रतियोद्धृरभावादप्रतिरथः । यतः प्रद्युम्नः । प्रकृष्टमनन्तं बलमस्येत्यर्थः । अतिविक्रमिणामपि चानूरा-दोनां हेलैव विनाशनादमितविक्रमः ॥८१॥

पुरा कालनेमिमधुना तु कंसमसुरं निहतवानिति कालनेमि-निहा । सकचग्रहं सानुजञ्च जघानेति नेरर्थः । विशेषेणेरयतिस्म तमाकृष्टवानिति वीरः । "हरिर्यथेभं विचकर्ष स्योऽव्यय" इति श्री-शुकोक्तेः । अतः कंसारिरित्यष्टोत्तरशतनाम्नि । यतः शौरिः शूरस्य वसुदेवस्य पुत्रः । पितृद्रोहिणि तस्मिन्नेवमेवौचित्यादिभावः । एव-मिति विक्रमं कंसं निहत्य शूरजनानाश्वश्नुते व्याप्नोतीति शूरजनेश्वरः । शूरैः प्रभुत्वेन संमत इत्यर्थः । कंसवधोपकारेण त्रयानां लोकाणां प्रेमास्पदत्वात्त्रिलोकात्मा । "हते कंसे त्रयो लोकाः प्राप्नुवन्निर्वृतिं परा"मिति स्मृतेः । स्व स्व-कर्म्मसूत्रत्रयाणां लोकानां नियम्य प्रवर्त्तनात्त्रिलोकेशः । सूर्य्यादि-संक्रान्तांशुमत्त्वात् केशवः । "सूर्य्यस्य तपसो लोकानग्नेः सोमस्य चाप्युत ! अंशवो ये प्रकाशन्ते मम ते केशसञ्ज्ञिताः । सर्व्वाज्ञाः केशवं तस्मान्मामाहुर्मुनिसत्तमा" इति स्मृतेः । प्रशान्तनीलकुन्तलत्वाद्वा केशवः । केशाद्वोन्यतरस्यामिति सूत्रात् । केशिनमश्वाकृतिं दानवं हतवानिति केशिहा । केशिवधेन देवादीनां गोपानाञ्च मनोहरणाद्धरिः । अच इति सूत्रादि ॥८२॥

कामं यथेष्टं दीव्यति केशिनं निहत्य माद्यतीति कामदेवः । केशि-वधेन तेषां काममभिलाषं पालयति पूरयतीति कामपालः । केशिस्व-

**ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।**
**ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥८४॥**

मिनः कंसस्य वधे साभिलाषत्वात्कामी । केन सुखेनान्तति वध्नाति देवादीनिति कान्तः । अतिवन्धने धातुः । केशिनं निहत्य स्वबन्धु-गोष्ठ्यां प्रवेशकरणात् कृतागमः । केशिवधप्रकरणमत्रोदाहरणम् । अनिर्द्देश्यं परब्रह्मभावेन निर्द्देष्टुमशक्यं वपुरस्येत्यनिर्द्देश्यवपुः । अतसीपुष्पप्रभवस्य ग्राम्यवद्गोपकुमारैः सह क्रीड़तः परब्रह्मत्वं दुर्व्वो-धमित्यर्थः । तद्याथात्म्यज्ञानात्तु सुवोधं तत्त्वमित्याह विष्णुरिति । द्यावापृथिव्यौ व्याप्नोति तत्र कान्तिमान् क्रामतीति विष्णुः । "व्याप्ता मेरोदसी पार्थ कान्तिश्चाभ्यधिका मम । अधिभूतानि चान्तेषु तदिच्छंश्चास्मि भारत । क्रमाणाच्चाप्यहं पार्थ विष्णुरित्यभि-संज्ञित" इति स्मरणात् । विशिष्टा परब्रह्मत्ववोधिका इरा वाक् यस्मिन् स वीरः । "मनोमयः प्राणशरीरो भारूपः सत्यकामः सत्य-सङ्कल्प आकाशात्मे"त्यादिका वेदान्तवाक् यद्विषय इत्यर्थः । अविशुद्ध-मनसामनिकटत्वादनन्तः । अन्त प्रान्ते ऽन्तिके नाशे इत्यादि विश्व-कोषात् । धनानि कंससम्पदो जयति जित्वोग्रसेनाय ददातीति धनञ्जयः ॥८३॥

ब्रह्मणे गर्गाय हितो ब्रह्मण्यः, गवादित्वाद्यत् तेनोपनीतस्तत्-सेवीत्यर्थः । ब्रह्म करोति ब्रह्मचर्य्य-लक्षणं तपश्चरतीति ब्रह्मकृत् । ब्रह्मतत्त्वं तपो वेदो ब्रह्म विप्रः प्रजापतिरिति नानार्थवर्गः । निखिल-ब्राह्मण-तत्कर्म्ममूलभूतो ब्रह्मापि स्वयमेव भवतीति ब्रह्मा । "भवे-त्कचिन्महाकल्पे ब्रह्मा जीवोप्युपासनैः । कचिदत्र महाविष्णु ब्रह्मत्वं प्रतिपद्यत" इति स्मृतेः । यतो ब्रह्मसमष्टिव्यष्टिभूतान् पुरुषान् वृंहयन्ति स्वयञ्च निःसीमातिशय – स्वरूपगुणविभूतिभिर्वृंहति चेति निरुक्तेः । सर्व्वतत्त्वसमाश्रयं वेदान्तवेद्यं परं तत्त्वमित्यर्थः । "बृहत्वाद्वृंहणत्वाच्च तस्माद्ब्रह्मेति शब्दित" इति शिववचनात् । ब्रह्मणो विप्रान् ब्रह्म च तदनुष्ठेयं तपो विवर्द्धयतीति ब्रह्मविवर्द्धनः । गायत्रीलक्षणं ब्रह्म वेत्ति गर्गादिति ब्रह्मवित् । "गर्गाद्यदुकुलाचार्य्या-द्गायत्रं व्रतमास्थिताविति" श्रीशुकवाक्यात् । वेदार्थ-प्रचारायात्रि-गोत्रादिषु दत्तात्रेयादि-रूपेणाविर्भवन् ब्राह्मणः । ब्रह्माणि प्रधा-नादितत्त्वानि नियम्यतया नित्यं सन्त्यस्येति ब्रह्मी । अवन्तीगतः सान्दीपनेः सकाशाद्वेदलक्षणं ब्रह्म जानाति वर्णतोऽर्थतश्च वेत्तीति ब्रह्मज्ञः । ब्रह्मणस्य सान्दीपनेर्गुरोर्मृतपुत्रानयनेन प्रीतिकर्त्तृत्वाद् ब्राह्मणप्रियः । ततो गुरुकुले वासमिच्छन्तावुपजग्मतुरित्यादि चात्रो-दाहरणम् ॥८४॥



**महाक्रमो महाकर्मा महातेजा महोरगः ।**
**महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥८५॥**

अवन्त्या मथुरामागतस्य कालयवनं दिधक्षोर्महान्तः क्रमाः पाद-विक्षेपा यस्य मुचुकुन्दगुहान्तगामिनः स महाक्रमः । महत् पूजार्हं श्लाघनीयं कर्म्म यस्य स महाकर्म्मा । यदुभिरवध्य यादवेनैव स्वयं धीवलेन भस्मीभावविधानादित्याशयः । महद्दुःसहं तेजोऽस्येति महातेजाः । "किं स्वित्तेजस्विनां तेजो भगवान् वा विभावसुरिति" मुचुकुन्दवाक्यात् । महता उरसा हृदयेन गच्छति स्वभक्तं मुचुकुन्द-मिति महोरगः । मुचुकुन्दप्रसादकृदित्यष्टोत्तरशतनाम्नि । तत्राह उरः शब्देन हृदयमत्र लक्षणीयं सज्जात्याद्यनपेक्षो निर्व्याजतया स्वभक्त-प्रणयीत्यर्थः । यतो रामत्वेनावतारे निषादराजं गुहमालिलिङ्ग । गृध्रस्य जटायुष उद्ध्वंदैहिकं कर्म्म चकार । शवरीगृहे तद्दत्तानि फल्यान्यतिप्रीत्या वुभुजे इति । उक्तं निर्व्याजभक्तप्रणयित्वं व्यञ्जयति चतुर्भिः । सुशकत्वेनाक्षयफलत्वेन चान्यक्रतोर्महान् क्रतुस्तुलस्यर्प-णादिलक्षणोऽस्येति महाक्रतुः । तादृश-क्रतुकारित्वेनान्ययाजिभ्यो

**स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।**
**पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥८६॥**

महान्तो यज्वानोऽस्येति महायज्वा । हिंसादि-दोषवैधुर्य्येणान्य-यज्ञेभ्यो महान् जपलक्षणो यज्ञोऽस्येति महायज्ञः । नमस्कार-स्वाध्यायौषधिरूपत्वेनातिपवित्रत्वादन्यहविभ्यो महान्ति हवींषि यस्य स महाहविः । एषूदाहरणानि विष्णुधर्म्मे—"तुलसीदलमात्रेण जलस्य चुलुकेन च । विक्रीणीते स्वमात्मानं भक्तेभ्यो भक्तवत्सलः ।" मोक्षधर्म्मे-"याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतवुद्धिभिः । ताः सर्व्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् । जप्येनैव च संशुद्धयेद्-ब्राह्मणो नात्र संशयः । कुर्य्यादन्यन्न वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ।" "कीर्त्तनादेव कृष्णस्य मुक्तवन्धः परं ब्रजेत् ।" "कृष्ण-प्रणामी न पुनर्भवाय ।" "यदेतत् सुकृतं हव्यं तेन तुष्यन्ति देवताः । नमस्कारेण हविषा स्वाध्यायैरपी" त्यादीनि स्मृतिवचनानि मृग्यानि । औषधैर्व्रीहियवादिभिरित्यर्थः । इत्थञ्च कायवाङ्मनो-व्यापारेण सुकरेण समाराध्यत्वात्तथात्वमागतम् ॥८५॥

अथ वाग्व्यापारेणैव समाराध्यत्वात्तदाह-नित्यानन्तकल्याण-गुणकतया स्तोतुमर्हः स्तव्यः । वाहुलकादचो यत् । नामकीर्त्तन-लक्षणः स्तवः प्रियः प्रीतिकर्त्ताऽस्येति स्तवप्रियः । स्तूयतेऽनेनेति स्तोत्रं स्तुतिकरणभूतोऽप्ययमिति ध्रुवचरिते व्यक्तमेतत् । भगवता कम्बुनास्पृष्टचिवुकोध्रुवस्तवमस्तौषीत् स्तूयते यमिति स्तुतिः । यद्यपि स्तौतेःकरणेक्तिन् श्रुयजीषि स्तुभ्यः करेण इति सूत्रात् तथापि वाहुलकात् कर्म्मण्यपि श्रीयते स्वभक्तं स्तोतुं शीलमस्येति स्तोता । "वन्दितो हि स वन्देत मानितो मानयति चे"त्यादि स्मरणात् । दुष्ट-संहारलक्षणो रणप्रियोऽस्येति रणप्रियः । यतो राजन्यवेशान् दुष्टान् भूपान् असुरांश्च दुर्वृत्तान् जघान । दुर्य्योधनकुलान्तक इति दानवेन्द्र-



**मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।**
**वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥८७॥**

विनाशन इति चाष्टोत्तरशतनाम्नि । ननु कथमनन्तान् दुष्टानेको जघान तत्राह पूर्णः । अनन्तैः पराक्रमैरिति शेषः । एवं दुर्वृत्तान्निहत्य पूनाति विशुद्धान् करोतीति पुण्यः । पूञोयन्नुक्द्ध्रस्वश्च । स्वरूपवत् कीर्त्तिरूपजनपावनीति पुण्यकीर्त्तिः एवं कीर्त्तिरूपमहौषधेन संस्मृतिरोगविरोधित्वादनामयः ॥८६॥

त्वरैवानामयत्वकरणान्मनोजवः । कीर्त्तनादेव कृष्णस्येत्यादि-स्मृतिभ्यः । स्वप्राप्त्युपायगीतादि-शास्त्र-प्रवर्त्तनात्तीर्थकरः । तीर्थं शास्त्रावतारयोरिति श्रीधरः । वक्ष्यति च । योगज्ञानं तथासंख्य-मित्यादि । अगाधे स्वतत्वे प्रवेशयितुं चरित्रसोपानकरणात्तथेत्येके । वसन्ति महादादीनि प्रतिसर्गेऽत्रेति वसुप्रधानं, तस्मिन् रेतश्चित्पर-माणुवृन्दं यस्य स वसुरेताः । "मम योनिर्महद्ब्रह्म"त्यादि स्मृतेः । वसूनष्टौ प्रकर्षेणादयते पालयतीति वसुप्रदः । देङ्पालने धातुः । वसूनि धनानि प्रदायति परिशोधयति सत्पात्रदानेन स्वसंमुखाना-मिति पुनर्वसुप्रदः । वादेषु वेद्यतया निवासाद्वासुदेवः । "वसनादेव वादे च वासुदेवेति शब्दित" इति शिववचनात् । वसति नित्ये धाम्नि नित्यमिति वसुः । वसौ भीष्मे मनो यस्य स वसुमनाः । "शरतल्पो गतो भीष्मः शाम्यन्निवहुतासनः । मां ध्यायति पुरुषव्याघ्र ततो मे तद्गतं मन" इति तद्वाक्यात् । हूयते भीष्मेण दीयते स्वनिर्याणे स्वदृष्टिविषयतया गृह्यत इति हविः । हू दानादानयोरादाने चेत्येके । प्रीणाते प्रीतिभाष्यमिति व्याख्यातारः । हूयते तेन प्रीतं क्रियते इति तथेत्येके । भीष्ममुक्तिप्रदायक इत्यष्टोत्तरशतनाम्नि । भीष्मे मुक्ते तत्पूर्व्वपदव्यां जीवान्तरमभिषिक्तमिति वोध्यम् ॥८७॥

**सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।**
**शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥८८॥**
**भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।**
**दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥८९॥**

सतां भीष्मादीनां प्राप्यत्वात् सद्गतिः । सती शोभना कृतिर्निर्याणसमये भक्तसाचिव्यरूपा क्रियाऽस्येति सत्कृतिः । "यदि वातादिदोषेण मद्भक्तो मां न च स्मरेत् । अहं स्मरामि मद्भक्तं नयामि परमां गति" मिति वाराहवचनात् । पाण्डवान् व्रजजनांश्च सत्तुं गन्तुं शीलमस्येति सत्ता । "यर्ह्यम्बुजाक्षापससार भो भवान् कुरून् मधून्वाथ सुहृद्दिदृक्षया" इत्यादि द्वारावतीप्रजावचनात् ।

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
सप्तमं नाम शतकं व्याख्यातम् ।

सतो युधिष्ठिरस्योग्रसेनस्य बलेश्च स्वभक्तस्य दूतं प्रतीहारश्च भवन् सद्भूतिः । सन्तं परममयनमस्येति सत्परायणः । "साधवो हृदयं मह्यं साधूनां हृदयन्त्वहम् । मदन्यं ते न जानन्ति नाहं तेभ्यो मनागपीत्यादि" स्मृतिभ्यः । शूरा विक्रान्ता सेनास्येति शूरसेनः । यदुराजमान्यत्वाद् यदुश्रेष्ठः । यादवेन्द्र यदुद्वह इति द्वयमष्टोत्तरशतनाम्नि । सन्नतिमनोज्ञो निवासो द्वारकास्येति सन्निवासः । यमुनाया अदूरभवो बृहद्वनादिर्यामुनः सुशोभनोऽस्येति सुयामुनः । अदूरभवश्चेत्यण् ॥८८॥

भूतान्याभिमुख्येनास्मिन् वसन्तीति भूतावासः । "वसन्ति त्वयि भूतानि भूतावासस्ततो भवानिति शिवोक्तेः । वस्ते प्रेम्नाच्छादयति पाण्डवान् यदूंश्चेति वासुः, दीव्यति क्रीड़ति तैः सहेति देवः । ततः कर्म्मधारयाद्वासुदेवः । तेषां सर्व्वेषां प्राणावलम्बत्वात् सर्व्वासु



**विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।**
**अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥९०॥**

निलयः । तेषां सर्व्वार्थसाधकोऽनलः । न किञ्चित् कृतं मयैषामित्यपर्य्याप्तिं मन्वानः स्वभक्तापराधक्षमने पर्य्याप्तो वा भक्तविद्विषामनलं कर्त्ता वा भक्ताधिकाराणामनिवारको वेत्यर्थः । अतिदृप्तानां दुर्य्योधनादीनां दर्पं हतवान् राजसूयं युधिष्ठिरस्य संपाद्येति दर्पहा । ईदृशकर्म्मापि स्वयमदृप्तो निरभिमानः । मागधवधतन्निरुद्धनिखिलनृपविमोक्षणकर्म्मणाप्यात्मना स भावनारहित इत्यर्थः । पाण्डवदूत्याय गतो दुर्मन्त्रिभिर्दुर्य्योधनादिभिश्चतुर्भिर्धर्त्तुं निगृहीतुमशक्यत्त्वाद्दुर्द्धरः । "इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पमेधसः । पटेनाग्निप्रज्वलन्तं यथा वाला यथा जड़ा" इत्यादिस्मरणात् । अथेति ग्रन्थमध्ये मङ्गलम् । अपराजितस्तैः पराजेतुं निगृहीतुमशक्यः ॥८९॥

ननु कुतस्तैर्वहुभिरेको न पराजितस्तत्राह विश्वमूर्त्तिरित्यादि देवगन्धर्व्वमानवादि-सर्व्वशरीर इत्यर्थः । अतो महामूर्त्तिः । नहि तदङ्गभूतैश्चतुर्भिस्तैस्तादृशः स धर्त्तुं पराजेतुं वा शक्य इति भावः । दीप्ता वहुसूर्य्याग्निसंकाशा मूर्त्तिरस्येति दीप्तमूर्त्तिः । न केवलं विश्वमूर्त्तिरपित्वमूर्त्तिमान् । विश्वोपादानभूता ये प्रधानमहदादयो मूर्त्तयोऽर्थस्तेपि यस्य शरीरभूता नित्यं सन्तीत्यर्थः । यस्याव्यक्तं शरीरमित्यादि श्रुतेः । मूर्त्तत्वप्रतिषेधे ह्यमूर्त्तिरित्येव ब्रूयात् । अष्टोत्तरशतोत्तरेषु षोड़शसहस्रेषु गृहेषु युगपदवस्थितेरनेकमूर्त्तिः । षोड़शस्त्रीसहस्रेश इत्यष्टोत्तरशतनाम्नि । एकत्वमजहदेव सर्व्वेषु गृहेषु कथमस्तीति नारदेनापि ज्ञातुमशक्यत्वादव्यक्तः । "चित्रं वतैतदेकेन वपुषा युगपत् पृथक् । गृहेषु द्व्यष्टसाहस्रं स्त्रिय एक उदावहदिति" स्मरणात् । अतोऽयं शतमूर्त्तिः । शतानि मूर्त्तयोऽस्येति एव शतानन इति चोक्तम् ॥९०॥

**एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।**
**लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥६१॥**
**सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।**
**वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥६२॥**

एवं वहुरूपत्वेऽप्यद्वैतमेतीत्येकः । इनगतावित्यतः कन् । वहुरूपताया अपि तात्त्विकत्वान्नैकः । न शब्देन समासान्नलोपो नः । एवं तर्हि द्वैताश्रयणमिति चेत्तत्राह सव इति । स्यन्ति द्वैताद्वैतभ्रान्तिमिति सा । अन्येष्वपि दृश्यत इति डः । एकत्र वाचिन्त्यशक्त्या वहुमूर्त्तिर्भवतीति सिद्धान्तिन इत्यर्थः । तेषु वसति नतु द्वैताद्वैताश्रयिष्विति सवः । पूर्व्ववड्डः । तेषु कनति दीप्यते तान् गच्छति नतु द्वैताद्वैताश्रयानिति कः । कनीदीप्तिकान्तिगतिष्विति धातुपाठः । पूर्व्ववड्डः । तेषां प्रष्टव्यत्वत् किम् । प्रच्छेरिम् प्रत्ययः । कादेशश्च सोन्वेष्टव्यः । "स विजिज्ञासितव्य" इति श्रुतेः ॥ यतते तेषां सौख्यानीति तत् क्विप् चेति तनोतेः क्विपि गमादीनामपि वक्तव्यमित्यनुनासिकलोपः । ततस्तुक् तेषां परमाश्रयत्वादुत्तमं पदम् । लोकान् भक्तजनान् वध्नाति स्वविषयकप्रेमरसनयेति लोकबन्धुः । बन्ध बन्धने धातुः । शृ स्वृ इत्याति सूत्रादुः । तन्मूलमसाधारणं सम्वन्धमाह लोकनाथ इति तेषां लोकानां स्वामीत्यर्थः । ननु प्रतिवादिनोऽन्यान् रुद्रादीन् लोकेश्वरानाहु, कथमेते तमेव लोकेश्वरं मन्येरन् तत्राह माधव इति तेषां मां ज्ञानं धूनोति भ्रान्तितया खण्डयति स्वगीतोपनिषदेति माधवः । रुद्रादीनां लोकेश्वरत्वं तदाराधनादेव महादेवः । सर्व्वमेधे महात्मेत्यादि स्मरणात् । अस्यत्वौत्पत्तिकं तत्त्वम् । "तमीश्वराणां परमं महेश्वरमि"त्यादि-श्रवणात् । यतो भक्तवत्सलः सर्व्वदा भक्तेच्छुरित्यर्थः । वत्सात्कामेलच् रुदादयस्तु स्वभक्तेषु कुप्यन्ति तान् भ्रंशयन्ति च ॥६१॥



**अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।**
**सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥६३॥**

सुवर्णस्येव वर्णो रूपमस्येति सुवर्णवर्णः । "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिमिति" श्रुतेः । हेमवत् स्पृहणीयानि वर्णाधिष्ठानान्यङ्गानि यस्य स हेमाङ्गः । वराणि सौन्दर्य्यवन्त्यङ्गानि अस्येति वराङ्गः । चन्दने भक्तचित्ताह्लादके अङ्गदे अस्येति चन्दनाङ्गदी । सुवर्णवर्णादि-चतुष्टयं केचित् कृष्णचैतन्यतायां योजयन्ति । तदा सुवर्णवर्णशब्देन लक्षणा वीरविक्षेपकाः, कामादयस्तान् हतवान् भक्तानामिति वीरहा । सर्व्वविलक्षणत्वात् विषमः । "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः । भक्तपक्षपातित्वाद्वा । दैत्यादीनां शमूनयन् शून्यः । "शमूनं कुरुते विष्णुरदृश्यः सन्परः स्वयम् । तस्माच्छून्य इति प्रोक्तस्तोदनात्तूच्छ उच्यते" इति स्मृतेः । दोषशून्यत्वाद्वा तथेत्येके । घृता भक्तानां दीपिता भक्तानां रक्षिता चाशीर्येन स घृताशीः । घृक्षरेण दीप्तचोश्छान्दसः । पाण्डवरक्षणातोऽचलनादचलः । तमहं शस्त्रं ग्राहयिष्यामि स्वभक्तभीष्मप्रतिज्ञां सत्यां कुर्व्वन् शस्त्रं मया न ग्राह्यमिति स्वप्रतिज्ञायाश्चलति धृतरथाङ्गः सन्निति चलः ॥६२॥

मानशून्यतया भक्तकार्य्याणि स्वसाधयन्नमानी । यतः स्वयं सर्व्वेश्वरोपि निहीनकर्म्मसु प्रातीहारत्वदूत्य-सारथित्वादिष्वधिकारतत्तस्य कैङ्कर्य्यमलं भृतान्नो विज्ञापयत्यङ्ग यदुग्रसेनम् । तिष्ठान्निषण्णं परमेष्ठिधिष्ण्ये न्यवोध यद्देव निवोधयेति । "सारथ्यपारिषदसेवनसख्यदौत्यवीरासहानुगमनस्तवनप्रणामम् । स्निग्धेषु पाण्डुषु जगत् प्रणतिञ्च विष्णो भक्तिं करोति नृपतिश्चरणारणारविन्दे ।" कृष्णः पादानने जने इत्यादि स्मरणात् । एवं तेभ्यो मानदानान्मानदः । तत्प्रतिपक्षमानावखण्डनाद्वा प्रतीहारत्वादिषु तैर्मन्तव्यत्वा-

**तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः।**
**प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥६४॥**

न्मान्यः। एवं कुतश्चकार तत्राह। लोकस्वामीति सर्व्वजगन्निर्व्वाहक इत्यर्थः। त्रिलोकधृगिति धारकतया पालकतयाच त्रिलोकीं धर्जति गच्छतीति तस्य स्वाभाविकोऽयं धर्म्मः। स्वभक्तसम्बन्धेन तु कैमुत्यं तत्र सिद्धं तदेवव्यञ्जयति स्वयं प्रभुत्वेऽपि भक्तवश्यत्वेन गुणेन शोभना मेधा धारणावती धीरस्येति सुमेधाः। मेधृ सङ्गमे च। चान्मेधा-हिंसनयोरिति व्याख्यातारः। मेधभक्तसङ्गमे जायते प्रादुर्भवतीति मेधजः। एकान्तिनो भक्तान् धनानि लब्धोतिधन्यः। "नमोऽकिञ्चन वित्ताय" इति स्मरणात्। वज्रवादिषु भक्तेषु तत्तत्सम्बन्धात्मिका मेधा सत्यैव न मनुष्यनाट्यरूपास्येति सत्यमेधाः। "यदि वोऽस्ति-मयि प्रीतिः श्लाघ्योऽहं भवतां यदि। तदात्मबन्धुसदृशी बुद्धिर्वः क्रियतां मयि। नाहं देवो नगन्धर्व्वो न यक्षो न च राक्षसः। अहं वो बान्धवो जातो नातश्चिन्त्यमतोऽन्यथेति।" "अनुकम्प्याः प्रजा हि व" इति स्मरणात्। अतो बन्धुभावोचितं कर्म्म चकारेत्याह। धरस्य गोवर्द्धनस्य गिरेर्धरणाद्धराधरः ॥६३॥

स्वबन्धुरक्षायै शक्रादि-दुःसहानि तेजांसि वर्षतीति तेजो वृषः। तद्रक्षोत्साहोत्सलितां द्युतिं धरतीति द्युतिधरः। मागधशाल्वादि-युद्धेषु सर्व्वेषु शस्त्रभृताम्वरः। तेष्वभिनिविश्य तान्निजघानेत्यर्थः। प्रगृह्यते सारथ्येनायमर्ज्जुनेनेति प्रग्रहः। ग्रहवृह निश्चिगम-श्चेत्यप्। निवृह्यन्ते पार्थशत्रवः कालदृष्टिनानेनेति निग्रहः। पार्थ-शत्रुविनाशे सत्वरत्वाद्व्यग्रः। ऋज्रेन्द्रेत्यादि सूत्रादगेरक् नलोपश्च। तद्विनाशायानेकानि शृङ्गान्युपाया यस्य स नैकशृङ्गः। ते चोपाया भारते प्रसिद्धाः। शृ हिंसायां धातुस्तस्माद्गन् दध्रस्वत्वं नुट्च। गदः स्वकनिष्ठस्ततः प्राक्प्रादुर्भावाद्गदाग्रजः ॥६४॥



**चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः।**
**चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥६५॥**
**समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः।**
**दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥६६॥**

चत्वारो नरनारायण-हरिकृष्णा-धर्म्मपुत्रा मूर्त्तयोऽस्येति चतुर्मूर्त्तिः। चत्वारो भीमार्ज्जुनसात्यक्युद्धवावाहवोऽस्येति चतुर्बाहुः। चतुर्भिर्व्वेदैर्व्यूह्यते परेशत्वेन वृध्यते यमिति चतुर्व्यूहः। हलश्चेति कर्म्मणि घञ्। चतुर्णामार्त्तादीनां भक्तानां यथाभावमाश्रयत्वाच्चतुर्गतिः। चतुर्षु तेषु धामसु गतिः क्रीड़ा सेति वा चतुर्णां सिंहशार्दूल-गजबृषभानामिव गति रस्येति वा चतुर्षु भक्तैरुपार्जनीयेषु वर्ग-ष्वात्मा प्रयत्नोऽस्येति चतुरात्मा। चतुरो वर्गान् भावयत्युत्पादयति भजतामिति चतुर्भावः। चतुरो वेदान् वेदयति भक्तानिति चतुर्वेद-वित्। असंख्येयज्यादण्डलक्षणः प्रपञ्च एकः पादो विभूत्यंशोऽस्येति एकपात्। "पादोऽस्य विश्वभूतानीति" श्रुतेः। "अण्डानां तु सह-स्रानां सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटि कोटि शतानि चेति" स्मृतेश्च ॥६५॥

सम्यक् तान्यावर्त्तयति पुनः पुनः सृजतीति समावर्त्तः। अव्यु-च्छिन्नास्ततस्त्वेते इत्यादि स्मृतेः। प्रलये जगद्व्यापारान्निवृत्त आत्मा मनोऽस्येति निवृत्तात्मा। "स्व-सृष्टमिदमापीय शयानं सह शक्तिभि" रिति स्मृतेः। तेष्वनुवृत्तत्वादनिवृत्तात्मेत्येके। दुःसाधेन समाधिना जीयते हृदि वशीक्रियते इति दुर्जयः। दुःखदोऽतिक्रमः शासनोल्लङ्घन-मस्येति दुरतिक्रमः। दुःसाधया भक्त्या लभ्यते इति दुर्लभः। "जन्मान्तरसहस्रेषु तपोदानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते।" इति स्मृतेः। दुःसाधेनोपनिषद्विचारेण

शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥९७॥
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥९८॥

गम्यते बुध्यते इति दुर्गमः । दुःसाधेन साम्ना गीयते इत दुर्गः । वाहुलकात् कर्म्मणि कः । दुःसाधया प्रपत्त्या वास्यते हृदीति दुरावासः । नन्वतिकष्टं तद्भजनं तत्राह । दुरारिहेति । दुष्टारिं प्रतिगच्छन्तीति दुरारिणः कामादयस्तान् हतवानिति तत्र साहाय्यकारित्वान्नातिकष्टमित्यर्थः ॥९६॥

शुभानि गुरुशास्त्रोक्ति-विश्वास-स्वप्नाश्वासन-लक्षणान्यङ्गयत्युपलम्भयतीति शुभाङ्गः । तदुक्त-साहाय्यादपि नातिकष्टं तद्भजनमित्याह लोकसारङ्ग इति । लोका हरिभक्तजनाः सारङ्गा मनोद्वलद्गुणगायका यस्य स इत्यर्थः । शोभनास्तन्तरः स्वसंमुखजनमनोहरिणग्राहिगुणकर्म्म-वागुरा यस्य स सुतन्तुः । तल्लक्षणांस्तम्भून् बर्द्धयति मनोज्ञैरवतारैरिति तन्तुवर्द्धनः । इन्द्रार्थं कर्म्म यस्य स इन्द्रकर्म्मा । तदेव विसदयन्नाह । महान्ति भौमवधमणिपर्व्वछत्रादिति कुण्डलानयनानि कर्म्माणि यस्य स महाकर्म्मा । कृतानि षोड़शसाहस्रराजकन्याहरणपारिजातानयन-तिखिलदेव-निर्जय-लक्षणानि कर्म्माणि रुद्रजय-वाणवाहुच्छेदानिरुद्धोषानयनलक्षणानि वा येन सकृतकर्म्मा । कृतस्तत्तच्चरितानि प्रकाश्य द्वारकायामागमो येन स कृतागमः ॥९७॥

उत्कृष्टो भवस्तत् कर्म्महेतुककीर्त्ति-प्राप्तिर्नृपकन्या-परिजात-प्राप्तिर्वायस्य स उद्भवः । भूप्राप्तौ धातुः । यथोचिताङ्गसन्निवेशत्वात् सुन्दरः । सुष्ठुन्दति कृपावृष्ट्यार्द्रीकरोति स्वाश्रितानिति सुन्दः ।



सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरः ।
महाह्लदो महागर्तो महाभूतो महानिधिः ॥९९॥

पृषोदरादिः । उन्दोकेलदने धातुः । रत्नवत् पद्मरागवदरुनिम्ना शोभमाना नाभिरस्येति रत्ननाभः । अरुणान्ततया दैर्घ्येन च शोभमाने लोचने नेत्रेऽस्येति सुलोचनः । अर्च्यते स्तूयते ऽसावित्यर्कः । अर्कस्तवने धातुः । राजमन्नं सनोति ददातीति राजसनः । "अन्नादोवसुदान" इति श्रुतेः । शृङ्गं महिषादिवादनसाधनमस्येति शृङ्गी गोपलीलः । "प्रवोधयन् शृङ्गरवेनेति" श्रीशुकोक्तिः । जयति सखीन् वाहुयुद्धे वाग्युद्धे वेति जयन्तः । जेरन्त-प्रत्ययः । सर्व्ववित्सु वशिष्ठवामदेवादिषु जयो महोत्कर्षोऽस्य नित्यमस्तीति सर्व्वविज्जयी ॥९८॥

सुवर्णा रम्या विन्दवोऽवयवा अस्येति सुवर्णविन्दुः । विन्दुर्नवेप्यवयव इति मेदिनीकरः । सुवर्णो ललाटस्थो विन्दुरस्येति अपरे । प्रेमासंपृक्तैर्भामिनीनां कृत्रिमैः स्मितादिभिः क्षोभयितुमशक्यत्वादक्षोभ्यः । "यस्येन्द्रियं विमथितुं कुहकैर्नशेकुरि"ति सूतवाक्यात् ।

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्न्यष्टमं नामशतकं व्याख्यातम् ।

सर्व्वाः श्रुत्यादिलक्षणा वाचो यत्र स सर्व्ववाक् । निखिलशास्त्रप्रतिपाद्य इत्यर्थः । यत ईश्वरेश्वर विधिरुद्रादिनियामकः । "तमीश्वराणां परमं महेश्वर" मित्यादि श्रुतेः । "स्वयन्त्वसाम्यातिशयस्त्र्यधीश" इत्यादि स्मृतिश्च । संसृतितापतप्तानां मुमुक्षूनां सर्व्वेषां तत्तापनिवर्त्तकत्वान्महाह्रदः । "संसारवैरीत्यष्टोत्तरशतनाम्नि" । ब्रह्माण्डकोटीनामेकदेशसमावेशान्महागर्त्तः । "इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुड़ाकेश यच्चान्यद्द्रष्टुमिच्छसीति" स्मृतेः । महान्ति भूतानि यस्मात् स महाभूतः । महान्तो निधयो यस्मात् स

**कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।**
**अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥१००॥**
**सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।**
**न्यग्रोधोदुम्बरोऽश्वत्थश्चाणूरान्ध्रनिषूदनः ॥१०१॥**

महानिधिः । "विसृजति हृदयं न यस्य साक्षाद्धरिरवशाभिहितौप्यघौघनाशः । प्रणयरसनयाधृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्त" इत्यादि-स्मरणात् ॥९९॥

कुन्दं निधिभेदं राति ददाति तल्लिप्सुभ्य इति कुन्दरः । महापद्मादीनां निधीनामुपलक्षणमेतत् । कुन्दकुसुमधारणात् कुन्दः । अर्शआद्यच् । "कुन्ददामकृतकौतुकवेश" इति श्रीशुकवाक्यात् । यद्वा कुं स्वतत्त्वज्ञानभावितां चित्तभूमिं ददाति भक्तेभ्य इति कुन्दः । नुमार्षः । "ददामि बुद्धियोगं तं येन मामुपयान्ति त" इति स्मरणात् । तस्यां चित्तभूमौ वर्षति निजरूपामृतमिति पर्ज्जन्यः । पृषु सेचने ततोऽन्यप्रत्यये निपातोऽयम् । दैवाद्दुष्कर्म्मदूषितां तां चित्तभूमिं पवते पुनातीति पवनः । "स्वपादमूल" मित्यादि स्मृतेः । नितरां लाति गृह्णात्येकान्तिनो भक्तानित्यनिलः । यद्वा कंसवधनिर्ज्जिताया इलाया भूमेरुग्रसेनाय दानादनिलः । "क्षितिरिलाक्षौणीक्ष्माक्ष्माचलेति" हलायुधः । रुक्मिणीस्पृहया निद्रापरित्यागाद्वा । इल स्वप्न-विक्षेपयोधातुः । "तथाहमपि तच्चित्तो निद्राञ्च न लभे निशीति" तदुक्तेः । अमृतमयाचितं मोक्षमाशयति भोजयति भक्तानित्यमृताशः । अमृतं वपुर्यस्य सोऽमृतवपुर्नित्यविग्रह इत्यर्थः । सर्व्वामवस्थां जानाति भक्तानामिति सर्व्वज्ञः । दर्शनध्यानेत्यादेः । निरपेक्षं मुनिमित्यादेश्च । अतः सर्व्वतोमुखः सर्व्वदिग्देशवर्त्तिषु भक्तेषु मुखमस्येति ॥१००॥



**सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।**
**अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥१०२॥**

अथ मिथिलास्थिततां द्योतयन्नाह- श्रुतदेव-वहुलाश्वाभ्यां स्ववेश्मस्थाभ्यां लब्धत्वात् सुलभः । शोभनानि परमोत्सवरूपाणि जन्माष्टमी-कार्त्तिक-नियमादीनि व्रतानि यस्य सः सुव्रतः । स्वाभीष्टाद्योत्सवानुरोधेन द्वारकां गन्तुमशक्तयोस्तयोः स्वयमेव व्यासादिसहितो दृक्पथं गत इत्यर्थः । ननु कुतस्तौ तां नाजग्मतुस्तत्राह सिद्ध इति । तदर्च्चायां स्वयमेव नित्यं स्फुरन्नित्यर्थः । तावच्चामेव साक्षात् प्रभुमनुभवन्तावतस्तत्र नागताविति भावः । तद्भक्तिनियन्त्रितस्तद्भक्तिप्रतिकूलान्निरस्यन्नर्च्चात्मना तद्गृहे नित्यं निवसतीति भावेनाह । शत्रून् कामादीन् । श्रुतदेवस्य ब्रह्मर्षेर्जयति हृदि स्थितः सन्निति शत्रुजित् । शत्रून् वहुलाश्वराजर्षे राज्यविरोधिनस्तापयतीति शत्रुतापनः । न्यक्कृत्य रुणाद्धि निरये निक्षिपति स्वभक्तद्रोहिण इति न्यग्रोधः । पचाद्यच् । उद्गतं सर्व्वैर्गुणैरुत्कृष्टं प्रकृतिमण्डलस्योपरि वर्त्तमानं वा । वरं परमव्योम यस्य-स उडुम्बरः । पृषोदरादिः सन्धिरार्षः । भक्तान्नित्ये स्वपदे यो नयतीत्यर्थः । श्वस्तादृूपेण न स्थातेति निरुक्तेरश्वत्थः प्रपञ्चः सोऽस्यास्ति नित्यं नियम्यतयेत्यर्थः । आद्यच् । चराचरनिखिलनियामकस्य स्वभक्तवैरनिर्यातनं स्वभक्तसुखार्पणं न दुष्करमितिभावः । इह दृष्टान्तभावेनाह चाणूरं तन्नामानमान्ध्रमन्ध्रदेशोद्भवं निसूदितवानिति चाणूरान्ध्रनिसूदनः । अथ यथा माथुरभक्तानां वैरनिर्यातनं तेभ्यः सुखार्पणञ्च तं निहत्य कृत्यं तद्वदिति ॥१०१॥

तत्सेवकैरपि सुकरमेतत् । किमुत सर्व्वेश्वरेण तेनेति भावेनाह । सहस्रमर्च्चींषि सूर्य्यवर्त्तीनि येन स सहस्रार्च्चिः । "येन सूर्य्यस्तपति तेजसेद्ध" इति श्रुतेः । "यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

**अणुर्बृहत्कृशः स्थूलो गुणभृन्निर्गुणो महान् ।**
**अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः ॥१०३॥**

यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक''मिति स्मृतेश्च । सप्तकालीकराल्याद्या वह्ने र्जिह्वा येन स सप्तजिह्वः । सप्तभुवनान्येधांसि काष्ठवद्दाह्यानि यस्य स सप्तैधाः । संकर्षणः कालाग्निः । ''पातालतलमारभ्य संकर्षण-मुखानलः । दहन्नुर्द्ध्वशिखो विश्वग्वर्द्धते वायुनेरित'' इत्यादि स्मरणात् । सप्तभुवनानि वाहयति प्रापयत्यभ्युदयमिति सप्तवाहनः । पालयितृविष्णुरूप इत्यर्थः । अथात्मविग्रहतां सूचयति । नास्ति स्वरूपभिन्ना मूर्त्तिरस्येत्यमूर्त्तिः । आत्ममूर्त्तिरित्यर्थः । एवमाह श्रुतिः-''आत्मेत्येवोपासीते''ति स्मृतिश्च-''सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तय'' इति एवमाह सूत्रकारः-अरूपवदेव तत्प्रधानत्वादित्यादिना समान एवञ्चाभेदादित्यनेन च अतोऽनघः परमपावनः । ''पवित्राणां पवित्रं य'' इत्युक्तम् । ननु कथमात्मनो विज्ञानानन्दस्य मूर्त्तत्वं तत्राह-अचिन्त्यस्तर्कागोचरः श्रुत्येकगम्य इत्यर्थः । ''नैषा तर्केण मतिरापनेयेति'' श्रुतेः । ''तर्काप्रतिष्ठानादपी''ति सूत्रखण्डाच्च । तर्कगम्यत्ववादिना नैयायिकादिना भयं शृगालयोनिलाभलक्षणं करोतीति भयकृत् । ''आन्विक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् । तस्यैव फलनिर्वृ त्तिः शृगालत्वं वने ममेति'' स्मरणात् तद्वादं निराकुर्व्वतां तेभ्यो भयं नाशयतीति भयनाशनः ॥१०२॥

अचिन्त्यतां प्रपञ्चयति षड् भिः । जीवेन सह सुषुम्नयागमनादणुः । ब्रह्माण्डेऽप्यसमावेशाद्बृहत् । ''स भूमिं सर्व्वतस्स्पृष्ट्वा अत्यतिष्ठद्दशांगुल'' मिति श्रुतेः । शिलास्वप्यप्रतिहतप्रवेशत्वात् कृशः । कोटिब्रह्माण्डविग्रहत्वात् स्थूलः । गुणान् सत्वादीन् विभर्त्तीति गुणभृत् । भूतैस्तैरस्पर्शान्निर्गुणः । ''एतदीशनमीशस्य प्रकृतिस्थोऽपि-



**भारभृत्कथितो योगी योगीशः सर्वकामदः ।**
**आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥१०४॥**

तद्गुणैः । न युज्यते सदात्मस्थैर्यथा वुद्धिस्तदाश्रयेति'' स्मरणात् । ईदृशतया सर्व्वैरभ्यर्च्चत्वान्महान् । केनापि धर्त्तुमशक्यत्वादधृतः । ''मत्स्थानि सर्व्वभूतानि न चाहं तेष्ववस्थित'' इति स्मरणात् । स्वे महिम्नि धृतत्वात् स्वधृतः । ''स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति'' श्रुतेः । चन्द्रारविन्दतोऽपि शोभनमास्यमस्येति स्वास्यः । निखिलवेदभूषितमुखत्वात्तथेत्येके । स्वेषु स्वमात्रजीवातृषु भक्तेष्वासितुं योग्यत्वाद्वेत्यन्ये । प्राक्पूर्व्वसिद्धो वंशः प्रद्युम्नादि यस्य स प्राग्वंशः । वंशं यदोर्वर्द्धयतीति वंशवर्द्धनः यत्र षट् पञ्चाशत् कोटयः प्रधानभूता वभूवुः ॥१०३॥

अथ भक्तपोषणदीक्षिततां सूचयति । भावं स्वभक्तानां देहयात्रानिर्व्वाहं विभर्त्ति धत्ते इति भारभृत् । भर्त्ता सन् भ्रियमानो विभातीति श्रुत्या । दर्शनध्यानसंस्पर्शैरित्यादि स्मृत्या च तथात्वेन निगदितत्वात् कथितः । ननु कथमेको ऽनन्तान् भक्तान् भर्त्तुं क्षमस्तत्राह योगीति । नित्यं सत्यसंकल्पता लक्षणधर्म्मयोगवान्नित्यर्थः । सत्यसंकल्प इत्यष्टोत्तरशतनाम्नि । तथाच संकल्पेनैव तद्भृदीत । अतो योगीशः । सनकादीनां योगिनां स्वामी तेषां तद्योगद इत्यर्थः । अथ वासनाविभ्रष्टभक्तनिर्व्वाहकतां सूचयति । भोगवाञ्छया योगविभ्रष्टभ्यः स्वर्गेषु सर्व्वान् कामान् ददातीति सर्व्वकामदः । स्वर्गभोगानन्तरं तान् स्वभक्तगृहेषूत्पाद्याश्रमयत्या श्रमभाजः करोत्याश्रमः । द्वये ''प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः'' । शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते । अथवा योगिनामेव कुले भवति धीमता'' मिति स्मरणात् । स्वर्गादिभोगजन्मभ्यामप्यक्षीणेन पूर्व्वसंस्कारेण श्रमयत्यभ्यासयति त्वरैव योगमिति श्रमणः । ''तत्र तं वुद्धिसंयोगं

**धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।**
**अपराजितः सर्वसहो नियन्ताऽनियमोऽयमः ॥१०५॥**

लभते पौर्व्वदैहिक" मित्यादि स्मरणात् । योगभ्रष्टा अपि योगाभिमुख्यमात्रेण तत्पदमाप्तुं क्षमन्तेऽस्मात् सहायकादितिक्षमः । हलश्चेति क्षमेर्घञ् । नोदात्तोपदेशे तूपधा-वृद्धिनिषेधः प्रज्ञाद्यणिक्षामः । "नहि कल्याणकृतः कश्चिद्दुर्गतिं तात गच्छतीति" स्मृतेः । शोभनानि पर्णानि तुलसीपत्रान्येव नतु कनकरत्नानि यस्मिन् स सुपर्णः । अत्र विष्णुदासचोलेन्द्रचरितं पाद्मीयमुदाहरणं मृग्यम् । महर्षिशापाद्भूविवरं प्रविष्टं निजैकान्तिनं वसुं वायुवेगेन गरुडेन वाहयति पुनरुपरिचरं करोतीति वायुवाहनः । नारायणीये प्रसिद्धमेतत् ॥१०४॥

अथ लक्षणापतित्वं सूचयन्नाह । स्वयम्वरे मत्स्यवेधनाय धनुषो धरणाद्धनुर्द्धरः । तद्वेधनञ्च तदेकसाध्यमिति भावेनाह । धनुर्लक्षस्य मत्स्यस्य वेदो ज्ञानं यस्य स धनुर्व्वेदः । "पार्थोयत्तोऽसृजद्बाणं नाच्छिनत् पस्पृशे परम् । भगवान् धनुरादाय सज्जीकृत्य च लीलया । तस्मिन् सन्धाय विशिखं मत्स्यं वीक्ष्य सकृज्जले । छित्वेषुणा पातयत्तं मुहूर्त्तेऽभिजिति स्थिते" इति श्रीशुकोक्तेः । तत्र प्रतीपानर्ज्जुनेन दाम्यतीति दण्डः । अमन्ताड्डः । नाग्नजिती स्वयम्वरे सप्तानामुक्षणां दमनाद्दमयिता । ते त्वस्य दमकर्त्ताकोऽपि नाभूदित्यदमः । अथ रुक्मिणीपतित्वं स्मरन्नाह । रुक्मिसैनिकैः पराजितो नाभूदित्यपराजितः । सर्व्वाणि रुक्म्यवज्ञावचांसि सहत इति सर्व्वसहः । नुमभाव आर्षः । ततोऽतिकटूक्तेस्तस्य रुक्मिणो नियन्ता तद्बन्धन–तच्छिरोमुण्डनकर्त्तेत्यर्थः । जाम्बवती–पतित्वं सूचयन्नाह । नियच्छति जाम्बवन्तमहावनेन नियमः यमः । समुपनिविषुचेत्यप् । जाम्बवतीं स्यमन्तकञ्च नीत्वा पुरातने भक्ते यस्मिन् प्रसीदन् यच्छत्युपरमति युद्धादिति यमः । पचाद्यच् ॥१०५॥



**सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।**
**अभिप्रायः प्रियार्होऽर्हः प्रियकृत्प्रीतिवर्धनः ॥१०६॥**

अथ भामापतित्वं द्योतयन्नाह–सत्वं भामार्थको व्यवसायोऽतिशयितोऽस्त्यस्येति सत्ववान् । "सत्वं गुणे पिशाचादौ वले द्रव्य–स्वभावयोः । आत्मत्वे व्यवसाये च चित्ते प्राणेषु जन्तुष्विति" विश्वः । सत्वं धीबलं देहबलं प्राणवलं चार्हतीति सात्विकः । तदर्हतीति ठञ् । मदर्पितलाञ्छनः सत्राजिन्मणिमानीय ददानाय मह्यं त्रपाभयसिन्धुनिमग्नः स्वापराधक्षमायै तामसाधारणरूपगुणां भामां मणिना सहैव स्वयमेव दास्यतीति तत्तद्बलविशिष्ट इत्यर्थः । ततः सत्यः सत्यास्त्यस्यप्रेयसीत्वेनेत्यर्श आद्यच् । सत्यो निष्कपटो यो धर्म्मः पातिव्रत्यातिप्रेमलक्षणस्तत्परमयनं यस्य स सत्यधर्म्मपरायणः । सत्यं शपथतथ्ययोरिति नानार्थवर्गः । तं धर्म्ममुपजीवन्नवस्थित इत्यर्थः । अतः सत्यभामारत इत्यष्टोत्तरशतनाम्नि । अभितः प्रेयते प्राप्यते भक्तानुरक्तिस्वभावेन शैत्येनेव चन्द्र इत्यभिप्रायः । कर्म्मण्येरच् । अतः प्रियार्हः । एकान्तिभक्त्या प्रीतिकर्त्तॄन् स्वरूपज्ञान् भक्तान् इति लक्ष्मीमप्यनिच्छन् सत्करोतीति तथैत्यर्थः । अतोर्हः । तदितरत् सर्व्वं विहाय सर्व्वात्मभावेन तैराराध्य इत्यर्थः । वाहुलकात् कर्म्मणि पचाद्यच् । तेषामेव तात्पर्य्येण प्रियं करोतीति प्रियकृत् । लक्ष्मीनैरपेक्ष्ये प्रीतिं वर्द्धयतीति प्रीतिवर्द्धनः । अत्रोदाहरणम् । "चतुर्व्विधा भजन्ते मामि"त्यारभ्य "तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय" इत्यादिकं मृग्यम् । आर्त्तादीनां प्रियकरणं त्वौदार्य्यबलादेतत् तात्पर्य्यमिति वोध्यम । स्वभक्तानुरक्तस्य तन्नैरपेक्ष्यं श्रीभागवतादिषु प्रसिद्धम् ॥१०६॥

**विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।**
**रविर्विरोचनः सूर्यः सविता रविलोचनः ॥१०७॥**
**अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः ।**
**अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥१०८॥**

अथ तेषां भक्तानां स्वपादप्रापणे स्वयमेव हेतुरिति द्योतयन्नाह द्वादशभिः । विहायसि परव्योम्नि गतिर्येन स विहायसगतिः । पृषोदरादिः कथं तस्मिंस्तेषां गतिरिति चेत्तत्राह द्योतते सुषुम्नया निर्गतस्तद्भक्तोऽर्च्चिः प्राप्य यस्मात् स ज्योतिः । द्युतेर्विसत्यन्वादेश्च जः । शोभनो रुच्चिर्दिवसो यस्मात् स सुरुच्चिः । इगुपधात् कित् । यदनुग्रहादह्नायातीत्यर्थः । हुतभुक् चन्द्रो विभुः पूर्णो यत्र स हुतभुग्विभुः शुक्लपक्षः इहागत्या प्रकाशयोगादीश्वरस्य शुक्लपक्षत्वं लक्ष्यम् । देवदत्तस्येव शौर्य्ययोगात् सिंहत्वम् । तथाच यत्कृपया शुक्लपक्षेण यातीति । रवते गच्छत्युत्तरायणेन यस्मात् स रविः । रुङ्गतिरेषणयोः अचइः । यदनुकम्पयोत्तरायणेन यातीत्यर्थः । विरोचयति संवत्सरेण गच्छन्तं स्वोपासकमभिप्रौतं दीप्रञ्च करोतीति विरोचनः । यदनुग्रहात् सम्बत्सरेण गच्छतीत्यर्थः । वायुं सरति स्वोपासकं नीत्वेति सूर्य्यः । राजसूयेत्यादिसूत्रेण निपातोऽयं यदनुकम्पितो वायुना व्रजतीत्यर्थः । सूते जनयत्यादित्यलाभमिति सविता । यदनुकम्पयादित्येन प्रयातीत्यर्थः । रविणा तत्प्रकाशेन लोचयति दर्शयति चन्द्रमिति रविलोचनः । यदनुगृहीतश्चन्द्रेन गच्छतीत्यर्थः ॥१०७॥

न अन्तति गतिस्थगणरूपवन्धनं करोत्यपि तु विद्युता गमयति स्वभक्तमित्यनन्तः । ततो हुतभुग्भिरमृतपरिणामरूपं हुतं भुञ्जानैर्विद्युतपर्य्यन्तागतेनामानवेन पुरुषेण सहितैर्वरुणेन्द्रप्रजापतिभिः स्वपदगामिनं स्वभक्तं भुनक्ति पालयतीति हुतभुग्भोक्ता । तत्र तत्र



**सनात्सनातनतमः कपिलः कपिरप्ययः ।**
**स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक्स्वस्तिदक्षिणः ॥१०९**

हरेर्हेतुत्वं तु "तेषामहं समुद्धर्त्ता मृत्युसंसारसागरा"दित्यादि तद्वाक्यान्न सङ्गतं सर्व्वप्रवृत्तेस्तादधीन्याच्च । ततो मानवेन स्वपार्षदेनानीताय विध्वस्तलिङ्गदेहाय स्वभक्ताय स्वपार्षदतनुलाभरूपं सुखं ददातीति सुखदः । यद्वा निरपेक्षविशेषाय परमार्त्तायार्च्चिरादिनैरपेक्ष्येण स्वयमागत्यानीताय तद्रूपं सुखं ददातीति तथा । "नयामि परमं स्थानमर्चिरादिगतिं विना । गरुड़स्कन्धमारोप्य यथेष्टमनिवारित" इति वाराहवचनात्, पार्षदतनुरियं हरिसंकल्पसिद्धेस्तदात्मिका चित्सुखमयीति मन्तव्यं "यत्र त्वस्य सर्व्वमात्मैवाभूदिति" श्रुतेः, "वसन्ति यत्र पुरुषाः सर्व्वे वैकुण्ठमूर्त्तय" इतिस्मृतेश्च । ततोऽनैकदः । न एकं वस्तु ददात्यपितु स्वपर्य्यन्तानि सर्व्वाणि वस्तूनि ददातीत्यर्थः । श्रिया विभूतिभिश्च विशिष्टस्तस्याग्रे पुरो जायते प्रादुर्भवतीत्यग्रजः । कदाचिदपि तद्वियोगी न भवतीत्यर्थः । "एते ह्यर्च्चिरादयो द्वादशदेवताः स्वोपासकानयनाय देवयाने पथि परेशेन स्थापिता" इति मन्तव्यम् । "अर्च्चिरादिना तत् प्रथिते"रित्याद्यधिकरणेभ्यः" एवमुक्तं निर्णेतृभिः । "अर्च्चिर्दिनसितपक्षै रिहोत्तरायणशरन्मरुद्रविभिः । विधुविद्युद्वरुणेन्द्रद्रुहिनैश्चागात् पदं हरेर्मुक्त" इति । एवमतिप्रयत्नाद्बहून् स्वभक्तानतिदुर्लभस्वपदं प्रापय्यान्येषामपक्वसाधनानां स्वभक्तानां सदेवामृषति तेषां हितमिति सदामर्षी । लोकानां स्वान्तिकमागतानां स्वजनानां नित्यमाश्रयत्वाल्लोकाधिष्ठानं विचित्रैः प्रतिक्षणं नूतनैर्गुणरूपचरितैस्तैस्तेषां विस्मयकरणादद्भुतः । आदिभुवो डुत् च ॥१०८॥

सनं तद्दत्तं रसगन्धादि अत्तीति सनात् । सनातनानां नित्यमुक्तानामयमतिशयेन सनातनतमः । सनातनत्वेऽपि तेषां तदातन-

**अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।**
**शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥११०॥**

त्ववत् प्रतीय इत्यर्थः । तेभ्यस्तस्यायमुत्कर्षस्तमरर्थः कामयते तानिति कपिलः । कमेः पश्चेति सूत्रेण कमेरिलचपोन्तादेशः । तत्सेवा-रूपं कं पिवतीति कपिः । इप कृष्यादिभ्यः । आतोलोपः । न व्येति तेषां समाजादित्यव्ययः । स्वस्ति कल्याणं सोरसेरितेतिः । वाहुलकाद्भ्वा-देशो न स्वरादि पाठादव्ययत्वं तद्दातीति स्वस्तिदः । स्वस्ति कृन्त-त्यभक्तानामिति स्वस्तिकृत् ।

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
नवमं शतकं व्याख्यातम् ॥

परमकल्याणत्वात् स्वयमेव स्वस्ति । स्वस्ति कल्याणं भुनक्ति पालयति स्मर्त्तॄणामिति स्वयं स्वस्ति भुङ्क्तेऽनुभवतीति वा स्व-स्तिभुक् । स्वनित्यं धामादिकं कल्याणरूपत्वात् स्वस्तीत्युच्यते । सा दक्षिणा स्वभक्तिसत्रर्त्विग्भ्यो देयमस्येति स्वस्तिदक्षिणः ॥१०९॥

आनन्दपूर्णत्वादरौद्रः प्रसन्नमूर्त्तिः । "अरोषणोऽह्यसौ देवेति" स्मृतेः । मकराकारकुण्डलवत्वात् कुण्डली । मुकुटे केयूरहारादेरुप-लक्षणमेतत् । चक्रमपरिमितं सैन्यमस्यास्तीति चक्री । असंख्येय-दुर्वृत्तदैत्य-दानव-विमर्द्दकक्षम-शौर्य्यशालित्वाद्विक्रमी । विधिरुद्राद्य-लङ्घ्याज्ञत्वादूर्जितशासनः । शब्दानेति गच्छति शब्दातिगः । अन्य-त्रापि दृश्यत इति डः । सहस्रवक्त्रेण गीर्देव्या चागण्यगुणगण इत्यर्थः । अथ दुर्वासः परिक्लिष्ट-पाण्डवक्लेश-हारितां द्योतयन्नाह-शब्दं द्रौपद्या कारुण्यवाक्यं सहते शृणोतीति शब्दसहः । संज्ञायां भृतॄ इत्यादि-सूत्रात् खच् । वाहुलकात्मुमभावः । कृष्णाव्यसन-कर्षक इत्यष्टोत्तरशतनाम्नि । दृष्टमात्रस्तेषां सन्तापं निवर्त्तयतीति शिशिरः । दुर्वासः क्षुद्विहिंस्रा शाककणिक-शर्व्वरी सा करे यस्य स



**अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।**
**विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥१११॥**
**उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।**
**वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥११२॥**

शर्व्वरीकरः । शृणातेः ष्वरच् । चरुलग्न-शाक-कणिकया विश्वा-त्मनि यस्मिंस्तृप्तेति तृप्तो दुर्व्वासाभयात् पलायित इति भावः ॥११०॥

पाण्डवक्लेशकारकं दुर्व्वाससं ब्रह्मण्यदेवत्वान्नकृत्तवानित्यक्रूरः । कृतेश्च रक् चेति सूत्राद्दक् आदेशः । उभय समाधानेन कर्म्मणा रमणीयत्वात्तस्मिन् कुशलत्वाद्वा पेशलः । पेशलो रुचिरे दक्षे इति विश्वः । स्मृतमात्रस्त्वरया गतवानिति दक्षः । दंशति दुर्योधनोद्यम-मिति दक्षिणः । दंशे रौणादिकः किन् । दुर्व्वाससस्तादृशमपराधं क्षान्तवानिति क्षमिणाम्बरः । अथ गजेन्द्रोद्धारकतां सूचयन्नाह-स्वैकशरण्यस्य गजेन्द्रस्य विपद्विनाशेऽतिनिपुणत्वाद्विद्वत्तमः । वीतं विनष्टं गजेन्द्रस्य ग्राहाद्भयं येन स वीतभयः । गजेन्द्रं ग्राहञ्च जला-शयात्तटमानीय ग्राहं विदार्य्य यो गजेन्द्रं निर्भयं चकार इत्यर्थः । "ग्राहग्रस्तं गजेन्द्रञ्च तं ग्राहञ्च जलाशयात् । उज्जहाराप्रमेयात्मा तरसा मधुसूदन" इत्यादिस्मरणात् । पापहारि-गजेन्द्र-सम्बन्धि-श्रवणादित्वात् पुण्यश्रवणकीर्त्तनः । "श्रुतेन हि कुरुश्रेष्ठ स्मृतेन कथितेन वा । गजेन्द्रमोक्षणेनैव सद्य पापात् प्रमुच्यत" इति स्मर-णात् ॥१११॥

सरोवराद्गजेन्द्रमुत्तारयामासेत्युत्तारणः । दुष्कृतिं ग्राहं हत-वानिति दुष्कृतिहा । "स्थलस्थं दारयामास ग्राहं चक्रेण माधवः । मोचयामास नागेन्द्रं पाशेभ्यः शरणागत" मिति स्मरणात् । गजे-न्द्रोद्धारचरितेनाधूनिकानपि पूनातीति पुण्यः । गजेन्द्रं कृष्णं सरश्च

अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥११३॥

स्मरतां दुःस्वप्नदोषां नाशयतीति दुःस्वप्ननाशनः । "तदहं श्रोतुमिच्छामि नृणां दुःस्वप्ननाशन"मिति । "दुःस्वप्नदर्शनं घोरमवेक्ष्य भरतर्षभ । प्रयतः किं जपेज्जाप्यं विवुधः किमनुस्मरे" दितिरादौ प्रश्नः । "येमां त्वाञ्च सरश्चैव ग्राहस्य च विमोक्षणं" इत्यारभ्य "ये स्मरिष्यन्ति मनुजाः प्रयताः स्थिरवुद्धयः । दुःस्वप्नो नश्यते तेषां सुस्वप्नश्च भविष्यती" त्यन्ते तदुत्तरञ्च । वीरं विक्रान्तं ग्राहं हतवानिति वीरहा । स्थलस्थं दारयामासेत्यादि स्मरणात् । स्पर्शनपरिरम्भणादिभिर्गजेन्द्रं रक्षितवानिति रक्षणः । "एवमुक्त्वा महाराज गजेन्द्रं मधुसूदनः । स्पर्शयामास हस्तेन गजं गन्धर्व्वमेव चे" त्यादि स्मरणात् । एवं गजेन्द्रं शरणागतं संतनोतीति सन्तः । संपूर्व्वात्तनोतेरन्येभ्योऽपि दृश्यत इति डः । ग्राहमपि गन्धर्व्वत्वेन जीवतीति जीवनः । "स हि देवलशापेन हुहूर्गन्धर्व्वसत्तमः । ग्राहोत्तमोऽगमत् कृष्णाद्वधं प्राप्य दिवं गत" इति स्मरणात् । वात्सल्यभरेण गजेन्द्रस्य परीतः स्थितत्वात् पर्य्यवस्थितः । "भक्तिं तस्य तु संचिन्त्य नागस्यामोघसंस्तवात् । प्रीतिमान् भगवान् राजन् श्रुत्वा चक्रगदाधरः । आरुह्य गरुड़ं विष्णुराजगाम सुरोत्तमः । सान्निध्यं कल्पयामास तस्मिन् सरसि लोकधृगि"ति स्मरणात् ॥११२॥

अथ ब्रह्ममोहकतां व्यञ्जयन्नाह – अनन्तान्यसंख्येयानि रूपाण्यस्येत्यनन्तरूपः । "यावद्वत्सक-वत्सपालपकवपुर्यावत्-कराङ्घ्र्यादिकं, यावद्यष्टिविषाण-वेणुदलशिग्यावद्विभूषाम्बरम् । यावच्छील-गुणाभिधाकृतिवयो यावद्विहारादिकं, सर्व्वं विष्णुमयं गिरोऽङ्गवदजः सर्व्वस्वरूपो वभौ" इत्यादि स्मृतेश्च । वत्साश्चासंख्याता एव "कृष्ण वत्सैरसंख्यातैर्यूथीकृत्य स्ववत्सकानिति" श्रीशुकवाक्यात् अनन्ताः



अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥११४॥

श्रियो विभूतयोऽस्येत्यनन्तश्रीः । सर्व्वसमृद्धि-निषेविततयाविर्भावात् । कोपोचितायाऽपि ब्रह्मणे कोपं न कृतवानिति जितमन्युः । सागसेऽपि मह्यमयमभयं दद्यादिति ब्रह्माशंसार्हो भयापहः । आशिषि हन् इति डः । सखिमातृप्रभृतीनां समाधाने न्यूनत्वाच्चतुरस्रः । ब्रह्मणावगाह्याभिप्रायत्वाद्गभीरात्मा । विशेषेण व्यापारेन न दिशत्याज्ञापयोत्यविदिशः । इगुपधत्वात् कः । सर्व्ववेदविदप्येष ब्रह्मा सखिभिः सगिंध मम राधितवानित्यप्रसन्नत्वाद् यो वाचा किञ्चिन्नादिदेश किन्त्विङ्गितेनैव याहीत्युवाचेत्यर्थः । यतो व्यादिशः । विविधानधिकारांस्तस्यादिशत्याज्ञापयतीत्यधिकारिणि तस्मिन्नेवमेवोचितमितिभावः । यतश्च स्वयमदिशः । नास्ति दिश आज्ञाप्रदोऽस्येति सर्व्वेश्वर इत्यर्थः । "तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्य"मिति मन्त्रवर्णात् । "स्वयन्त्वसाम्यातिशयस्त्र्यधीशः स्वाराज्यलक्ष्म्याप्तसमस्तकामः । वलिं हरद्भिश्चिरलोकपालैः किरीटकोटीड़ितपादपीठ" इति स्मृतिश्च ॥११३॥

अतोऽनादिः । नादीयते विधेय गृह्यते ब्रह्माद्यधिकृतैरित्यर्थः । भवति सापराधेऽपि ब्रह्मणि दयालुरिति भुः । भुवः संज्ञान्तरयोरिति क्विप् । भुवो ब्रजावनेरलङ्करणत्वाद्भुवोलक्ष्मीः । ततः समागतेषु सखिषु सुवीरः शोभनाः श्रीदामसुभद्रादयः स्वतुल्या वीरा यस्य स इत्यर्थः । ततो रुचिराङ्गदः । रुचिरमङ्गं तेभ्यो ददातीति तद्विधेयस्तानालिङ्गितवानित्यर्थः । अथ शङ्खचूड़निहन्तृतां द्योतयन्नाह- गोवर्द्धनोपप्रान्ते जनयति वासन्तिकरासोत्सवं प्रेयसीभिर्वृतः सह बलदेवेन सप्रियागणेनेति जननः । ननु जननोक्तेरनित्येयं लीलेति

**आधारनिलयोऽधाता पुष्पहासः प्रजागरः ।**
**ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥११५॥**

चेत्तत्राह – अजनं जन्मशून्यं जन्मादि यस्य सोऽजन-जन्मादिः । "एको देवो नित्यलीलानुरक्तो भक्तव्यापी भक्तहृद्यन्तरात्मेति" श्रवणात् । "जन्म कर्म्म च मे दिव्य" मिति स्मरणाच्च । प्रकाशान्तरेषु विद्यमानैव सा लीलास्मिन् प्रकाशे प्रादुर्भवतीति लीलानित्यत्वमन्यत्र विस्तृतम् । प्रेयसीः कालयति शङ्खचूड़े घोरत्वाद्भीमः । तासां संरक्षणे बलदेवं निरूप्य तमभिद्रुत्य निजघान । स्यमन्तकं चानिनायेति भीमपराक्रमः ॥११४॥

ततो गुणाधारभूतानां तासामाश्रयोऽभूदित्याधारनिलयः । यद्वा, अथ रासरसिकतां व्यञ्जयन्नाह–सौन्दर्य्य–लावण्य–सङ्गीत–नाट्य-साहित्यनैपुण्यादि–गुणाधारभूतानां शरद्राकायां वेणुवादनेनाहूतानां स्वप्रेयसीनां वल्लवीनां तत्तद्गुणग्राहकतया समाश्रयो भवं वाक्-चातुर्य्यस्मितकटाक्षादि–सुधापानाद्धाता । धेट् पाने तस्माच्छीलार्थ-स्तृन् । ताभिः सह स्मर–विलासोचित–परिहासाचरणात् पुष्पहासः । "उदारहास–द्विजकुन्ददीधितिर्व्यरोचतैनाङ्क इवोड़ुभिर्वृत" इति श्रीशुकोक्तेः । प्रवेशित–ब्रह्मरात्रि कृत्स्नां राकां ताभिः सह जागरणात् प्रजागरः । कोटि–संख्यानां तासामनन्तविचित्राश्च ते गुणास्तादृशाज्जागराद्विना नानुभूयेरन्निति तथोक्तम् । एवमाह शुकः । ब्रह्मरात्र उपावृत्त इति । शोभाविशेषेण कन्दर्पस्यापि न्यग्भावादूर्द्ध्वगः । "चकास गोपी–परिषद्गतोऽर्च्चितस्त्रैलोक्यलक्ष्म्यैकपदं वपुर्दधदित्यादि" श्रीशुकोक्तेः । सन्तं निर्हेतुकत्वेन स्तुभ्यं पन्थानं प्रीति-मार्गमाचरतीति सत्पथाचारः । ताभिस्तदा त्वत्सुखाय परित्यक्त-लोकादीनां त्वन्निवेशितात्मनां त्वदेकजीवातूनां नः परित्यागः किं हेतुक इति । भजतोऽनुभजन्त्येक इत्यादिर्वाग्भङ्ग्या पृष्टेन तेन मत्



**प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।**
**तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥११६॥**
**भूर्भुवः स्वस्तरुस्तारः सविता प्रपितामहः ।**
**यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥११७॥**

प्रेमवृद्धिहेतुः स इति नाहं त्वित्यादिभ्यां प्रदर्श्यापि । "न पारयेऽहं निरवद्य-संयुजां स्वसाधुकृत्यं विबुधायुषापि वः । या माभजन् दुर्जरगेह–शृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुने"त्येतत् प्रवदता भवतीनामृणयेवाहमस्मीति पक्षस्याभिधानात् । ताः संवृश्च्य या माभजन्निति । या अहं नाभजमिति तत्रार्थः प्राणः सर्व्वोपजीवनहेतुरात्मानं ददाति ताभ्य इति प्राणदः । तदेकविधेय इत्यर्थः । ततः प्रणवः । तादृक् प्रीति–रीति–वित्तमत्त्वेन नूयत इत्यर्थः । ऋदोरप् । पणानि व्यवहरति तथैव ताभिरिति पणः ॥११५॥

तादृशेन व्यवहारेण प्रीतिमार्गप्रमातृत्वात् प्रमाणम् । प्राणन्ति तत् स्नेहामृतेन सम्बन्धवतेति प्राणास्तत्प्रेयसीजनास्ते निलीयन्तेऽस्मिन् शकुन्ता इव नीड़े इति प्राणनिलयः । पुंसि संज्ञायां प्रायेनघः । प्राणांस्तान् विभर्त्ति शुचिरसानन्देनेति प्राणभृत् । प्राणास्ते जीवनमस्येति प्राणजीवनः । नच योषित्प्रसङ्गप्रचुरं विष्णोरेतत् कर्म्म मायिकमित्याह–तत्त्वमिति । "तत्त्वं वाद्यप्रभेदे स्यात् स्वस्वरूपे परमात्मनी"ति विश्वः । परमात्मनः पराख्य–स्वरूपशक्तिविलासभूत-तत्तद्धाम –विभूति–परिकर–कर्म्म–विशिष्ट–वस्तुत्वान्न तस्य तत्कर्म्म मायिकमित्यर्थः । तत्त्वं तादृशं स्वरूपं नित्यं विन्दतीति तत्त्ववित् । तद्वस्तुत्वादेकात्मा । एको निखिलात्ममुख्य आत्मेति पुरुषोत्तमः सर्व्वेश्वर इत्यर्थः । "एके मुख्यान्य–केवला"इत्यमरः । तत एव जन्ममृत्युजरातिगः जन्मादीन् षड़्विकारानतिक्रान्त इत्यर्थः ॥११६॥

**यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।**
**यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥११८॥**
**आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।**
**देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥११९॥**

रासरसिकस्यैव पारमैश्वर्य्यमाह । भूर्भुवः स्वरात्मकैस्त्रिभिर्लोकैस्तद्वर्त्ति-प्राणि-पक्षिभिरुपजीव्यच्छायादित्वाद्भूर्भुवः स्वस्तरुः । एवमपि स्वयं विशुद्धमौक्तिकप्रख्यत्वात्तारः । तारमुक्तादि-संशुद्धोतरणे शुद्धमौक्तिके इति विश्वः । एवं भावेन प्रसिद्धत्वात्स्वः नामत्वे सर्व्वनामकार्य्यमार्षत्वाद्बोध्यं तेषां जनकत्वात् पिता पोषकत्वाच्च प्रपिता । प्रकाशात्मकत्वान्महः । महश्चोत्सवतेजसोरिति नानार्थवर्गः । भक्तिमार्ग-प्रवर्त्तकतां सूचयन्नाह षड्भिः । अकिञ्चनानां तत्तदाराधनोपकरणत्वाद्यज्ञः । तत्तदाराधनसंरक्षकत्वाद्यज्ञपतिः । असक्तमकिञ्चनमाविश्य तत्तदाराधनं निवर्त्तयन् स्वयमेव यज्वा-सूयजोङ्वनिप् । तदाराधनलक्षणो यज्ञोऽङ्गं बोधकमस्येति यज्ञाङ्गः । तं यज्ञं वाहयति श्रद्धामुत्पाद्य ग्राहयतीति यज्ञवाहनः ॥११७॥

व्यङ्गं तं यज्ञं साङ्गं कुर्व्वन् बिभर्त्ति पुष्णातीति यज्ञभृत् । अथ निष्कामकर्म्ममार्ग-प्रवर्त्तकतामाह षड्भिः-लोकान् शिक्षयितुं यज्ञं करोतीति यज्ञकृत् । हरिवंशे विप्रपुत्रानयने ख्यातमेतत् । स यज्ञोऽस्त्यस्मिन्ननुपायतयेति यज्ञी । तं यज्ञं भुङ्क्तेऽनुभवतीति यज्ञभुक् । ज्ञान-दानेन यज्ञोपकारित्वाद्यज्ञसाधनः । यज्ञस्यान्तं फलानश्वयं करोतीति यज्ञान्तकृत् । तेन यज्ञेन तस्यैव मुख्योद्देश्यत्वाद्यज्ञ-गुह्यम् । यज्ञलभ्ये परमे व्योम्नि यद्दिव्यरसगन्धादिकमदनीयं भोग्यम् । तदपि संकल्पशक्त्या स्वयमेव भवतीत्यन्नं तदन्नमादयतीत्यन्नादः । नह्येतादृगन्योऽस्तीति बोधयितुमेवकारः । निखिलभोग्यसमुच्चायचकारः ॥११८॥



आत्मानं स्वं यौति मिश्रयति भक्तैः सहावासादिभोगे इत्यात्मयोनिः । "सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा-विपश्चितेति" श्रवणात् । अथ मथुरामण्डलाविर्भूततां व्यञ्जयन्नाह । स्वयं निजेच्छयैव सर्व्वैरंशैर्गुणैश्च परिपूर्णो जायते प्रादुर्भवतीति स्वयंभगवानित्यर्थः । "स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्दमानेष्वनुकम्पितात्मा । परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्नि"रिति स्मरणात् । जनित्वा च स्वभक्तदुःखविखनाद्वैखानः । खनोघचेति चाद्घञ् भावेपीति विखानः प्रज्ञाद्यनिवैखानः । निखिलदैत्यदानवदुष्टराजन्य-विनाशक इत्यर्थः । सामगायनमाश्रयो यस्य स सामगायनस्तेषु गेयतया स्थित इत्यर्थः । स्वयं क जातस्तत्राह देवकीनन्दनः । अत्राहुः देवकी नन्दपत्नी वसुदेवपत्नी च । "द्वे नाम्नी नन्दभार्य्याया यशोदा देवकीति" चेत्यादि-पुराणात् प्रसिद्धेश्च तस्यां तस्यांच जातः । एवमेव श्रीशुकेनाऽपि बोधितम् । "निशीथे तम उद्भूते जायमाने जनार्द्दने । देवक्यां देवरूपिण्यां विष्णुः सर्व्वगुहाशयः । आविरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कल" इति । "यशोदा नन्दपत्नी च जातं परमबुध्यत । न तल्लिङ्गं परिश्रान्ता निद्रयापगतस्मृति"रिति । अस्यार्थः-वसुदेवपत्नी नन्दपत्नी च, परं परेशमेव स्वगर्भाज्जातमबुध्यत, तस्य वसुदेवागमनादिलिङ्गं चिह्नं नाबुध्यत, यतः परीत्यादि । "इत्थञ्चादृश्यतानुजाविष्णोर्नन्दस्त्वात्मजे, गोपिकासुत"इत्यादिकं सूपपन्नं उपगुह्यात्मजामित्यादाविव गौणात्मजत्वशङ्काप्युत्सारिता । यशोदा-सूनुना सह देवकीसूनोरैक्यात्तदैक्यवतस्तस्य मथुरादौ गमनादनन्तरागमनात् स्फुटार्थेऽपि न सन्देहः । अतो यशोदावत्सलेति देवकीनन्दनेति चाष्टोत्तरशतनाम्नि तस्यास्तस्याश्च निःकण्टकतासर्ज्जनात् स्रष्टा । क्षितेर्भारमपनीयतां पालयन् क्षितीशः । पवित्रैश्चरित्रैः श्रोतॄणां निखिलकर्म्मरूपं पापं विवर्त्तयन्नसुरानामपि निहतानामविद्यां निवर्त्त्य मुक्तिं तेभ्यो यच्छन्

शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥१२०॥
इतीदं कीर्तनीयस्य केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥१२१॥

पापनाशनः ॥११९॥

सर्व्वधारकतां सर्व्वरक्षकताञ्च द्योतयन्नाह-अपां तत्त्वं पाञ्च-तत्त्वं पाञ्चजन्यं विभ्रच्छङ्खमभृत् । विज्ञानात्मको नन्दको सिरस्यास्तीति नन्दकी । तेजस्तत्त्वं सुदर्शनचक्रमस्यास्तीति चक्री । क्रिया तत्त्वं शार्ङ्गं धनुरस्येति शार्ङ्गधन्वा । धनुषश्चेत्यनङ् । वायुतत्त्वं गदां कौमोदकीं धारयन् गदाधरः । भक्तप्रतिज्ञा-प्रतिपालकतामतिश्लाघ्यत्वात् पुनराह रथाङ्गपाणिरिति भीष्मं प्रति प्रदर्शितमेतत् । त्यक्तशस्त्रोऽपि क्षोभयितुं धर्षितुमशक्यत्वादक्षोभ्यः। यतः सर्व्वेति सर्व्वेषां प्रहरणान्यायूधान्यस्येति तेषामप्यन्तर्य्यामीत्यर्थः। सर्व्वान्तर्य्यामिश्रुतेः ॥१२०॥

ॐनम इत्यन्तिमं मङ्गलाचरणम् । "प्राप्यन्ते प्रति नामार्थं प्रमाणान्यत्र यद्यपि । तथाऽपि तानि वाहुल्यभीत्या नो लिखितानि हि ।"

इति श्रीवैशम्पायनोक्ते विष्णुसहस्रनाम्नि
दशम शतकं व्याख्यातम् ॥

विष्णोर्नाम सहस्रं मे शृन्वति वक्तुं प्रतिज्ञातं नाम सहस्रमुपसंहरति । इतीदमिति कीर्त्तयितं योग्यस्य कीर्त्तनीयस्य केशवस्य केशिहन्तुः कृष्णस्य । "यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्द्दन । तस्मात् केशव-नामा त्वं लोके गेयो भविष्यसीति" स्मरणात् । महात्मनो विष्णोः दिव्यानामप्राकृतानां कीर्त्तितं मया भीष्मेण ।



य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किञ्चित्सोऽमुत्रेह च मानवः ॥१२२॥
वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेद् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥१२३॥
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात ।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥१२४॥
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नामेतत्प्रकीर्तयेत् ॥१२५॥

अशेषेण कात्स्न्र्येन ॥१२१॥

सकामान् प्रवर्त्तयितुमानुषङ्गिकफलमाह-य इति त्रिभिः । इदं स्तोत्रं नारददेवस्थानवात्स्य-सुमन्त्वादिभिः सर्व्ववेदोपदेष्टृभिः परावरतत्त्वदृग्भिर्देवब्रह्मर्षिभिः स्वयं भगवता च श्रोतृ-कोटि-निविष्टेन पुरुषोत्तमेनानुमोदितं यो मानवो नित्यं प्रतिदिनं शृणुयात् स्त्रीशूद्रादिः । यश्च परिकीर्त्तये ब्राह्मणादिः शृणुयाच्च स इहलोकेऽधिभूतादितापरूपममुत्र परलोके निरयनिपात-रूपं चाशुभं नाप्नुयात् ॥१२२॥

ब्राह्मणो वेदानामन्तं निर्णयं गच्छतीति तथा । शूद्रः परतन्त्र एतच्छ्रवणेन तत्त्वज्ञानोदयात् पारतन्त्र्यहीनः सुखीभवेत् ॥१२३॥

कामान् विहितान् विषयान् रूपरसादीन् ॥१२४॥

पुनस्तदाह भक्तीति त्रिभिः । भक्तिमान् सद्गुरुसेवानिष्ठः शुचिः पवित्रः कृतस्नानादिः । तद्गतमानसो वासुदेवनिहितचित्तः । वासुदेवस्य वसुसूनोभगवतः प्रकीर्त्तयेत् शृणुयाच्च यथाधिकारमिति बोध्यम् ॥१२५॥

यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥१२६॥
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्यरोगो द्युतिमान्बलरूपगुणान्वितः ॥१२७॥
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येतापन्न आपदः ॥१२८॥
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥१२९॥
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥१३०॥
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधि-भयं नैवोपजायते ॥१३१॥

---

वैश्यशूद्रयोः फलमाह यश इत्येकेन ॥१२६॥
क्षत्रियस्याह न भयमित्येकेन । वीर्य्यं पराक्रमं तेजः प्रभावम् ॥१२७
सर्व्वेषां साधारणफलमाह रोगार्त्त इति द्वाभ्याम् । बन्धो निगड़ादिना। भयाद्वैरिदुष्टसत्वहेतुकात् । आपन्नो विपद्ग्रस्तः ॥१२८॥
दुर्गाण्यतिघोराणि पापाणि ॥१२९॥
मुख्यं फलमाह-वासुदेवेति द्वाभ्याम् । विशुद्धस्त्यक्तः कृष्णसेवी कृष्णैकान्ती च मनुष्यो निखिलदोषशून्यः साक्षात्कृतस्वरूपः सनातनं ब्रह्म कृष्णाख्यं प्राप्नोतीत्यर्थः ॥१३०॥
साधननैर्विघ्न्यं चैतत् पाठादित्याह-अशुभमारब्धे कर्म्मण्यङ्गवैकल्येन फलवैकल्यं न भवति। जन्मादिभ्यश्चतुर्भ्यश्च भयं नोपजायते तच्छ्रवणादिना तद्वैकल्पे परिक्षयान्मुक्तेरवश्यम्भावित्वाच्च ॥१३१॥



इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥१३२॥
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥१३३॥
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥१३४॥
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥१३५॥
इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥१३६॥
सर्वागमानामाचारः प्रथमं परिकल्पते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥१३७॥

---

दृढ़तार्थं पुनरप्याहेममेति द्वाभ्याम् । श्रद्धा दृढ़विश्वासः । भक्ति रत्यादर आत्मसुखेन स्वानुभवेन क्षान्त्याद्वन्ध-सहनेन श्रिया वैराग्य-सम्पदा । निःस्पृहतया धृत्या कामदि-वेगधारणया ॥ स्मृत्या वासुदेव-ध्यानेन कीर्त्या तदुत्थया एताभिर्युज्यते संपन्नो भवतीत्यर्थः॥१३२
सिंहरवात् करीवैतत् पाठादेः क्रोधादिः पालय एवेत्याशयेनाह । न क्रोध इति । अशुभा पापाक्रान्तमतिः कृतपुण्यानामनुष्ठितनामपाठादीनाम् । पुण्यं तु चार्व्वतीत्यमरः ॥१३३॥
स्तुत्यस्य हरेः प्रभावं कथयति-द्यौरिति त्रिभिः । वीर्य्येण संकल्पलक्षणेन नितरां महानात्मा स्वरूपमस्येति विभोरित्यर्थः ॥१३४
अतः स चराचरेति वर्त्तत इदमिति वाच्ये सन्धिरार्षः ॥१३५॥
इन्द्रियादीनि क्षेत्रज्ञान्तानि वासुदेवात्मकान्याहुर्यस्य पृथिवीवमित्यद्याः श्रुतयः । वासुदेव आत्मा प्रवर्त्तको येषां तानि ॥१३६॥

ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारायणोद्भवम् ॥१३८॥
योगो ज्ञानं तथा सांख्यं विद्याः शिल्पादि कर्म च ।
वेदाः शास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥१३९॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रींल्लोकान्व्याप्य भूतात्माभुङ्क्ते विश्वभुगव्ययः ॥१४०॥

---

ननु मनुष्यकर्म्मणां मन्मातुलेयं कृष्णं किमेवं वदसीति चेत्तत्राह सर्व्वेति । सर्व्वेषामागमानां प्रथममाचारः स्नानसन्ध्योपासनादिः प्रतिपाद्यतया कल्पते । तत आचारात् प्रभवो यस्य स आचारमूलको धर्म्मोऽग्निहोत्रदर्शपौर्णमासादि परिकल्पते तस्य धर्म्मस्य प्रभुः पालकोऽच्युतः कृष्णो भवतीति । धर्म्म-संस्थापनाय तस्य मनुष्यवत् कर्म्माचरणं नतु तत्फलायेति भावः ॥१३७॥

कृष्णपराङ्मुखानां दुष्कुलीनत्वमनुपासितगुरुत्वं च दर्शयितुं तस्य जगत्पितृत्वं जगद्गुरुत्वञ्च दर्शयति ऋषय इति द्वाभ्याम् । नारायणान्निमित्तादुपादानाच्चोद्भवो यस्य तत् । नारायणोपनिषदत्रोदाहरणम् ॥१३८॥

योगोऽष्टाङ्गो वैष्णवः । ज्ञानं शमादिज्ञानसाधनम् । सांख्यं चिदचिद्विवेचनम् । विद्या रहस्यमन्त्रा शिल्पादि-कर्म्म चित्रादिनिर्म्माणं वेदा ऋगादयः शास्त्राणि तदर्थनिर्णेतृनि मीमांसा-सूत्राणि । विज्ञानं तदर्थानुभवः । एतत्सर्व्वं जनार्द्दनात् कृष्णादेव देवकीसूनोर्हेतोर्भवति ॥१३९॥

हरेर्निखिलव्याप्तिमाहैक इति सर्व्वकारणत्वान्महत् । पूर्व्वसिद्धत्वाद्भूतञ्च प्रधानं पृथग्भूतान्यनेकशोऽनेकानि महादिनि पृथिव्यन्तानि त्रींश्च लोकान् तद्रचितान् व्याप्य स्थितः । एकः सर्व्वोत्तमविष्णुर्वसुदेवसुतस्तव मातुलेयः । स्वभक्तार्पितमेव भुङ्क्ते नत्वन्यत् ।



इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥१४१॥
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ॥१४२॥

---

पत्र-पुष्पमित्यादेः भूतात्माऽनादिसिद्धेः । न केवलं तान्व्याप्यैवास्ति अपितु विश्वभुक् । व्याप्यानां विश्वेषां पालकश्चाव्ययस्तदवस्थगुणस्वभावः ॥१४०॥

यः पुरुषः सुखानि च प्राप्तुमिच्छेत् । इमं स्तवं पठेत् एतत् पाठेन तेषां सौलभ्यात् अत्रेच्छायाः पुरुषधर्म्मत्वमुक्तम् । कामः संकल्पो विचिकित्सेत्यादि श्रुताविच्छादिनां मनोरूपत्वम् । तदुक्तं तत्तु तद्द्वारा तेषामभिव्यक्तेर्वोध्यं व्यासेन कीर्त्तितमित्युक्तेः । स्तवस्य परमोपादेयत्वञ्च व्यञ्जितम् ॥१४१॥

विश्वेति एतत्पाठ--श्रवणाभ्यां ये पुष्कराक्षं कृष्णं भजन्ति ते पराभवं संसारव्यथां न यान्त्यपितु कृष्णलोकं गतास्तस्मिन् प्रमोदिनो नित्यं निवसन्तीति । इमानि हंस-मत्स्यादिवद्भगवदाविर्भावभूतान्येव मन्तव्यानि । साक्षान्मुक्तिदत्ते सति चिद्रुपत्वात् । "तस्योदिति नाम । स एष सर्व्वेभ्यः पाप्मभ्य उदितउदिति हवै सर्व्वेभ्यो य एवं वेद ॐ आस्य जानन्तो नाम चिदित्यादि" श्रवणात् । "मधुरमधुरमेतन्मङ्गलं मङ्गलानां, सकलनिगमवल्ली-सत्फलं चित्स्वरूपम् । सकृदपि परिगीतं श्रद्धया हेलया वा, भृगुवर नरमात्रं तारयेत् कृष्णनामे" त्यादि स्मरणाच्च । कण्ठतोऽप्येवमुक्तम् । "नामचिन्तामणिः कृष्ण" इत्यादौ । अतो यथा-भूतेषु नाममाहात्म्येष्वर्थान्तरकल्पकानां दोषः स्मर्य्यते । "श्रुतिस्मृतिपुराणेषु नाम माहात्म्य-वाचिषु । येऽर्थवाद इति ब्रूयुस्तेषां न निरयक्षयः । अर्थवादं हरेर्नाम्नि सद्भावयति यो नरः । स पापिष्ठो मनुष्याणां निरये पतति स्फुट" मित्यादिषु

**इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां शान्तिपर्व्वन्युत्तमानुशासने धर्म्मोत्तरे भीष्मयुधिष्ठिरसम्वादे श्रीविष्णोर्दिव्यसहस्रनामस्तोत्र सम्पूर्णम् ॥**

महाकारुणिकानि चैतानि यतः स्ववाच्यविषयान् द्वात्रिंशत् स्वविषयांश्च दशापराधान् जप्तानि विनाशयति । "तमपि देववरं करुणाकरं स्थावरजङ्गममुक्तिकरं परम्। अतिचरन्त्यपराधपराजयाय इहतानवनिध्रुवनाम हि" । "जाते नामापराधे तु प्रमादेन कथञ्चन । सदा संकीर्त्तयन्नाम तदेकशरणो भवेत् । नामापराधयुक्तानां नामान्येव हरन्त्यघम् । अविश्रान्ति-प्रयुक्तानि तान्येवार्थ-कराणि यदिति" पाद्मे सनत्कुमारवाक्यात् । तस्मान्नैरपराध्येनैव तादृशानि तानि जप्यान्युक्तफलेप्सुभिः, सुधीभिः। "अपराधविमुक्तो हि नाम्नि यत्नं समाचर। नाम्नैव तव देवर्षे सर्व्वं सेत्स्यति नान्यत" इति तत्रैव तद्वाक्यात् ॥१४२॥

"स्तोत्रेऽस्मिन् कथिताः श्लोकाः पक्षवेदेन्दुसंमिताः ।
अधिकास्तु वुधैर्वु द्धयाः प्रक्षिमा मुनिभाषिताः ॥१॥
कीटं यः क्षत्रियं कृत्वा ब्राह्मणञ्च दयाम्बुधिः ।
विष्णुलोकमदात्तस्मै स व्यासोऽस्तु ममाश्रयः ॥२॥
ये ये धर्म्मा वासुदेवस्य विष्णोर्वेदोद्गीताश्रित्तपदेऽधिरुढ़ः ।
तैस्तैर्नामान्यभ्यधात् सद्युनद्याः पुत्रस्तस्मान्नास्ति लीलाक्रमोऽस्मिन् ॥
नामाभ्यासेनाऽपि तैर्योगिमृग्या मुक्तिः स्यादित्याहुराम्नायवाचः ।
त्वद्वयाख्यात्र मह्यमीश प्रपद्या स्वस्मिन् भक्ति नाधिकं तत्प्रयाचे ॥
विद्याभूषणभणितं नामार्थसुधाभिधं भाष्यम् ।
सद्भिर्नाम-पुमर्थैः कृपया परिशोध्यतामेतत् ॥५॥
इति श्रीवैशम्पायनोक्तस्य विष्णुसहस्रनाम्नो भाष्यं
नामार्थसुधाख्यं पूर्त्तिमगात् ॥

## ❀ विष्णुसहस्रनाम का अनुवाद ❀

सौन्दर्य्य-माधुर्य्य-लावण्यादि अनन्त कल्याण गुणों के सागर, व्यापक, सच्चिदानन्दघन, भजनकारियों के प्रिय, त्रिशक्ति से युक्त, स्वरूपभूत नाना मूर्त्ति वाले, ईश्वर, विश्व के एकमात्र हेतु वे श्रीकृष्ण हम सब को शुभ प्रदान करें ॥१॥

सत्यवतीसुत, मुनिजन के गुरु, नारायण श्रीव्यास का हम स्तवन करते हैं। श्रीअच्युत नाम सुधा से आमोद प्राप्त वैशम्पायनजी की शरण लेते हैं। पुनः मुरारी के प्रियतम सर्वज्ञवर गंगापुत्र भीष्म जी एवं मुरारी की कथा-रस में संलिप्त सभ्यगण को बार बार नमस्कार करते हैं ॥२॥

चैतन्यात्मा मुरारी अर्थात् महाप्रभु कृष्णचैतन्यदेव हम सब के हृदय में नित्य निवास करें, जिनकी अनुकम्पा से गजपति अर्थात् उत्कलाधिप महाराज प्रतापरुद्र परम पवित्र भक्तशिरोमणि तथा निवृतिमान हुए। श्लेषपक्ष में-चैतन्यदेव ही जिनके आत्मा रूप हैं वे वैष्णव चूड़ामणि मुरारी अर्थात् रसिकमुरारीदेव हम सब के हृदय में नित्यतया निवास करें। जिनकी अनुकम्पा से महा उद्धत गजराज अर्थात् हस्तीश्रेष्ठ परमभक्त एवं निवृतिमान हुआ है। रसिकमुरारीजी ने महामत्त एक गजराज को दीक्षा सुना कर शिष्य किया था यह कथा भक्तमालादि ग्रन्थ में व गौड़ीय-इतिहास में प्रसिद्ध है ॥३॥

कीर्तन करने वालों के अभीष्टपूरक श्रीकृष्ण के वे नाम समूह जय प्राप्त हों जिनका युगपद् कीर्त्तन करते हुए शेषदेव नवीन आनन्द को प्राप्त करते हैं ॥४॥

एक मात्र नाम को पुमर्थ मानने वाले उन हरिभक्तों को हम

नमस्कार करते हैं, जिनकी कृपा से "नामार्थसुधा" नामक विष्णु-सहस्रनाम का यह भाष्य उत्पन्न हुआ है ॥५॥

व्यासजी के प्रियशिष्य, मुनिवर वैशम्पायनजी परमोपादेय के कारण बिना पूछे भी सौहार्द एवं कारुण्यवश राजा जन्मेजय के प्रति वक्ष्यमाण विष्णुसहस्रनामक स्तोत्र को कहने लगे कि-हे जन्मेजय सुनो, राजा युधिष्ठिर ने अशेष रूप से राजधर्म्म समूह तथा पवित्र कारक तीर्थों का श्रवण कर पुनः भीष्मजी को पूछा ॥१॥

"हमारे पितामह भीष्मजी अधुना शरशय्या में विराजमान हैं, उन्होंने अङ्गों के साथ समस्त वेद-उपनिषद् का अध्ययन किया है, जो ब्रह्मचर्य्यादिक समस्त धर्म में उपसम्पन्न हैं, भगवान् के वर से शस्त्रव्यथा से रहित हैं, जिन्होंने सर्वज्ञता का लाभ किया है एवं परिदृश्यमान परावर समस्त तत्त्व का हस्तामल किया है। अतः परतम तत्व का सामान्यतया पूछने पर भी वर्णन करेंगे" इस प्रकार आशय को लेकर राजा युधिष्ठिर चार प्रश्न पूछने लगे–हे पितामह ! इस जगत् में एकमात्र ईश्वर कौन हैं ? कौन वा जीव की एकमात्र गति है ? मानवगण किसकी स्तुति व अर्च्चना करते हैं ? और किसका गुण-कीर्त्तन आराधना से मानवगण मङ्गलप्राप्त करेंगे ? ॥२॥

आपने जिन धर्मों का कथन किया है उनमें से कौन धर्म्म श्रेष्ठ तथा बिना श्रम से फलप्रद है, सर्वज्ञ आपका किस में अभिमत है ? यह पाँचवाँ प्रश्न है। जीव किसका जप कर जन्म-संसार बन्धन से मुक्त होता है ? यह षष्ठ प्रश्न है। यहाँ जन्म शब्द का तात्पर्य्य गर्भ-नरकनिपात लक्षण कार्य्य है, संसार का अर्थ प्राचीन कर्मलक्षण कारण है। उन दोनों के बन्धन से मुक्त होता है इसका अर्थ उनके द्वारा परपदप्राप्तिनिरोधक जो बन्धन है उससे विमुक्त होने का है ॥३॥

अब विद्वत्तम भीष्मजी कहने लगे—निरन्तर पुमर्थ इच्छुक उद्योगी पुरुष स्थावर-जङ्गम के स्वामी, समस्त देवताओं के आराध्य,



स्वरूप-गुण-विभूतियों से अपरिमित, पुरुषोत्तम अर्थात् बद्ध-मुक्त उभयावस्था में उत्कृष्टतम भगवान् विष्णु का वक्ष्यमाण नाम सहस्र के द्वारा स्तवन कर समस्त दुःख से रहित होता है। यहाँ षष्ठश्लोक में उक्त "सर्वदुःखातिगो भवेत्" के साथ अन्वय है ॥४॥

अब चतुर्थप्रश्न का उत्तर देते हैं-यजमान अर्थात् अर्च्चक श्रद्धा-भक्ति के द्वारा उन नित्यस्वरूप-गुण-विभूति-लीलावाले पुरुष कृष्ण का पाद्यादि से अर्च्चन, उनकी मूर्त्ति का निरन्तर मन में धारण, तथा शरीर से साष्टांग प्रणमन करता हुआ वक्ष्यमाण स्तव से स्तवन कर दुःखातीत होता है ॥५॥

अब पुरुष की विशेषता का वर्णन करते हैं–वह अर्च्चक आदि एवं निधन रहित, समस्त पृथिवी के महेश्वर, समस्त लोगों के अध्यक्ष भगवान् विष्णु को नाम सहस्र से स्तवन कर समस्त दुःख का अतिक्रमण करता है अर्थात् त्रिताप दावाग्नि का अतिक्रमण कर आनन्द समुद्र श्रीकृष्ण का प्राप्त कर आनन्दी ( मुक्त ) स्वरूप हो जाता है। यहाँ "अनादि निधन" शब्द से कालोपाधि रहितत्व, "विष्णु" शब्द से देशोपाधिशून्यता, "सर्वलोक" शब्द से स्तवनकारी के वाञ्छितार्थ पूरकत्व, "लोकाध्यक्ष" शब्द से सर्वज्ञता को सूचित करनेके कारण भगवान् विष्णु अर्च्चन-स्तवन योग्यत्व सिद्ध हो रहे हैं। प्रथमश्लोक में केवल नामों का उच्चारण, मध्य में अर्च्चनादि पूर्वक उनका कीर्त्तन, अन्त में किसी भी प्रकार उनका उच्चारण कहा गया है। "जिसने सकृत "हरि" इन दोनों अक्षर का उच्चारण किया है वह मोक्ष प्राप्ति के लिये बद्ध परिकर हो गया है"। "हे भृगुवर ! कृष्ण यह नाम श्रद्धा से हों अथवा अवहेला से हों यदि एक बार किसी प्रकार उच्चारित होता है तो वह मनुष्य मात्र को उद्धार करता है" इत्यादि बहु प्रमाण हैं। यदि कहो कि दीर्घकाल पर्य्यन्त निरन्तर सेवित तीर्थ-तपः-समाधियों से वह मुक्ति दुर्ल्लभ है। नाम

का उच्चारण मात्र से वह किस प्रकार प्राप्त हो सकती है, तो कहते हैं सुनो, यह तुम नाम में अर्थवाद की कल्पना कर रहे हो, क्यों कि तुम नाम महिमा ज्ञात करने में अनभिज्ञ हो । स्मृति में हरिनाम में अर्थवाद की कल्पना अत्यन्त निषेध है ।।६।।

वे ब्रह्मण्य, सर्वधर्मज्ञ, लोगों के कीर्त्तिवर्द्धक, लोकनाथ, महद्भूत एवं भूतों के उद्भव रूप ब्रह्म-रुद्रादि के भी उद्भवस्थान हैं। ब्रह्मण्य शब्द का अर्थ-विप्र-देवता-तपो आदि के पालक हैं । सर्वधर्मज्ञ-अर्थात्-वेदोक्त अग्निहोत्र-दर्श पौर्णमासी, अपने अर्च्चन-ध्यान-प्रणति-स्तुति आदि को जानने वाले व शास्त्रोक्त फलों के दाता। लोगों का कीर्त्तिवर्द्धक-अर्थात् वेदोक्त उन उन धर्म्मों के अनुष्ठायि जनों की कीर्त्ति को बढ़ाने वाले तात्पर्य्य-तदनुसारि गुण-द्रविण-विद्या-वैराग्यादि प्रदान से उनके यश का विस्तारक। विधि-रुद्रादिक भी अपने अभिलषित-लाभ के लिये याचना करते हैं।

लोकनाथ—उन ब्रह्म-रुद्रादि के शास्ता । "ब्रह्माजी कोटि-सहस्रयुग भगवान् विष्णु की आराधना कर तीनलोक के धातृत्व प्राप्त हुए ।" "महादेव जी यज्ञों में अपने आत्मा को आहूति देकर देवदेव हुए" इत्यादि शास्त्र में है। "देवश्रेष्ठ ये दोनों विष्णु के प्रसाद-क्रोध से उत्पन्न हुए, उनके दर्शित-मार्ग से सृष्टि-संहारकारी बने" इत्यादि महाभारत में कहा गया है। महद्भूत—उन लोगों के पूज्य हैं क्यों कि उनके पूर्वसिद्ध हैं । सर्वभूतभवोद्भवं—अर्थात् सर्व-भूतों के उद्भव करने वाले ब्रह्म-रुद्र के भी उद्भव स्थान । "प्रजा-पति-रुद्र उन दोनों की सृष्टि मैं ही करता हूँ, वे दोनों मेरी माया से विमोहित होकर मुझको नहीं समझने पाते हैं" इत्यादि महाभारत में भगवान् का वचन है।७।।

अब पञ्चमप्रश्न का उत्तर देते हैं—हमसे कथित समस्त धर्म्मों में यह धर्म अधिकतम श्रेष्ठ है यह मेरा मत है । जो कि-पुण्डरी-



काक्ष श्रीकृष्ण की उनके आत्मा रूप नाम जप लक्षण स्तवों से अर्च्चना किया जावें। श्रद्धापूर्वक उनके नाम-कीर्त्तन लक्षण अर्च्चन हो परमधर्म है यह भीष्मजी का अभिमत है । भक्ति के द्वारा इस प्रकार कहने का तात्पर्य्य-कषायपान की भाँति विरस देवतान्तर का निषेध है। "पुण्डरीकाक्ष" शब्द से विकृत भयङ्कर देवतान्तर का स्तवन निषेध है। "स्तव" शब्द से बहु प्रयास वाले ज्योतिष्टो-मादि से उत्कर्षता दिखलाई जा रही है। "नरः" शब्द से द्विजत्वादि की अपेक्षा नहीं है । नर शब्द के एकवचन प्रयोग से बहुतों के साथ ऐसा कोई नियम नहीं बतलाया गया है। "सदा" शब्द से देशकाल-विशुद्धि की कोई अपेक्षा नहीं है ऐसा सूचित हो रहा है । भीष्मजी के द्वारा कथित नामों का यह अधिक महोत्कर्ष इसलिये है कि वे सब नाम साक्षात् भगवद्स्वरूप हैं। नाम एवं नामी दोनों अभेद हैं। नामी की भाँति नामों में शक्ति है । भागवतादि शास्त्रों में भगवद्-नाम की पर्याय महिमा कही गई है । "अच्छा "तीर्थाटनादिओं से मुक्ति होती है नाम से क्या है ?" इस प्रकार बतलाने वाले शास्त्र नामप्रभाव से अनभिज्ञ जनों का अधिकार करके जानना । "जप यज्ञ समस्त धर्म्मों से परमधर्म है, प्राणियों की अहिंसा से ही जपयज्ञ प्रवर्त्तित होता है" इस प्रकार भारत बचन है, तो भी नाम संकीर्त्तन का परम महत्त्व है ।।८।।

द्वितीय प्रश्न का उत्तर देते हैं—जो पुरुषोत्तम परम महत् हैं अर्थात् परम पूज्य वस्तु हैं, जो परम तेज हैं अर्थात् सूर्य्यादि तेजस्वी वस्तुओं के तेजः प्रद हैं, जो महत्तप अर्थात् उनके प्रशास्त वस्तु हैं। "जिनके भय से पवन बहता है, जिनके भयसे सूर्य्य उदय होता है, जिनसे भय-भीत होकर अग्नि, चन्द्र, मृत्यु धावित होते हैं" इत्यादि शास्त्र प्रमाण है। जो परम महत् अर्थात् सर्वव्यापक विभुस्वरूप हैं। जो परमब्रह्म हैं, एवं जो परम अयन अर्थात् सर्वाश्रयभूत वस्तु हैं ।।९।।

